विष्णुधर्मोत्तरान्तर्गतः

## माङ्गल्यस्तवः

दंष्ट्राकरालं सुरभीतिनाशकंकृतं वपुर्दिव्यनृसिंहरूपिणा ।
त्रातुं जगद् येन स सर्वदा प्रभुः ममास्तु माङ्गल्यविवृद्धये हरिः ॥ १

दैत्येन्द्रवक्षःसीलिदारदारुणैः करोरुहैर्यः क्रकचानुकारिभिः ।
चिच्छेद लोकस्य भयानि सोऽच्युतो ममास्तु माङ्गल्यविवृद्धये हरिः॥ २

दन्तान्तदीप्तद्युतिनिर्मलानि यः चकार सर्वाणि दिशां मुखानि ।
निनादवित्रासितदानवो ह्यसौ ममास्तु माङ्गल्यविवृद्धये हरिः ॥ ३

यन्नामसंकीर्तनतो महाभयात् विमोक्षमाप्नोति न संशयं नरः ।
ससर्वलोकार्तिहरो नृकेसरी ममास्तु माङ्गल्यविवृद्धये हरिः ॥ ४

सटाकरालभ्रमणानिलाहताः स्फुटन्ति यस्याम्बुधराः समन्ततः ।
स दिव्यसिंहः स्फुरितानलेक्षणः ममास्तु माङ्गल्यविवृद्धये हरिः ॥ ५

यदीक्षणज्योतिषु रश्मिमण्डलं
प्रलीनमीषन्न रराज भास्वतः ।
कुतः शशाङ्कस्य स दिव्यरूपदृक् (त्)
ममास्तु माङ्गल्यविवृद्धये हरिः ॥ ६

अशेषदेवेशनरेश्वरेश्वरैः सदा
स्तुतं यच्चरितं महाद्भतम् ।
स सर्वलोकार्तिहरो महाहरिः
ममास्तु माङ्गल्यविवृद्धये हरिः ॥ ७

द्रवन्ति दैत्याः प्रणमन्ति देवताः
नश्यन्ति रक्षांस्यपयान्ति चारयः ।
यत्कीर्तनात् सोऽद्भुतकेसरी
ममास्तु माङ्गल्यविवृद्धये हरिः ॥ ८

ஸ்ரீவிஷ்ணுதர்மோத்தரத்தில் உள்ள

# மாங்கள்யஸ்தவம்

தம்ஷ்ட்ராகராளம் ஸுரபீதிநாமகம்
க்ருதம் வபுர்திவ்யந்ருஸிம்ஹரூபிணா ।
த்ராதும் ஜகத் யேந ஸ ஸர்வதா ப்ரபு:
மமாஸ்து மாங்கள்யவிவ்ருத்தயேஸ ஹரி: ॥ 1

தைத்ஆயந்த்ரவக்ஷஸ்தல தாரதாருணை:
கரோருஹைர் ய: க்ரகசாநுகாரிகபி: ।
சிச்சேத லோகஸ்ய பயாநி ஸோऽச்யுதோ
மமாஸ்து மாங்கள்யவிவ்ருத்தயேஸ ஹரி: ॥ 2

தந்தாந்ததீப்தத்யுதிநிர்மலாநி ய:
சகார ஸர்வாணி திஶாம் முகாநி ।
நிநாதவித்ராஸிததாநவோ ஹ்யஸெள
மமாஸ்து மாங்கள்யவிவ்ருத்தயேஸ ஹரி: ॥ 3

யந்நாமஸங்கீர்த்தநதோ மஹாபயாத்
விமோக்ஷமாப்நோதி ந ஸம்ஶயம் நர: ।
ஸ ஸர்வலோகார்த்திஹரோ ந்ருகேஸரீ
மமாஸ்து மாங்கள்யவிவ்ருத்தயேஸ ஹரி: ॥ 4

ஸடாகராளப்ரமணாநிலாஹதா:
ஸ்புடந்தி யஸ்யாம்புதரா: ஸமந்தத: ।
ஸ திவ்யஸிம்ஹ: ஸ்புரிதாநலேக்ஷண:
மமாஸ்து மாங்கள்யவிவ்ருத்தயேஸ ஹரி: ॥ 5

யதீக்ஷணஜ்யோதிஷி ரஶ்மிமண்டலம்
ப்ரலீநமீஷந் ந ரராஜ பாஸ்வத: ।
குத: ஶஶாங்கஸ்ய ஸ திவ்யரூபத்ருக் (த்)
மமாஸ்து மாங்கள்யவிவ்ருத்தயேஸ ஹரி: ॥ 6

அஶேஷதேவேஶநரேஶ்வரேஶ்வரை:
ஸதா ஸ்துதம் யச்சரிதம் மஹாதபுதம் ।
ஸ ஸர்வலோகார்த்தஹரோ மஹாரி:
மமாஸ்து மாங்கள்யவிவ்ருத்தயேஸ ஹரி: ॥ 7

த்ரவந்தி தைத்யா: ப்ரணமந்தி தேவதா:
நஶ்யந்தி ரக்ஷாம்ஸி அபயாந்தி சாரய: ।
யத்கீர்த்தநாத் ஸோऽத்புதரூபகேஸரீ
மமாஸ்து மாங்கள்யவிவ்ருத்தயேஸ ஹரி: ॥ 8

# श्रीनृसिंहपुराणम्

## चतुस्त्रिंशोऽध्यायः

## CHAPTER XXXIV

श्रीसहस्रानीक उवाच

पुनरेव द्विजश्रेष्ठ मार्कण्डेय महामते।
निर्माल्यापनयाद् विष्णोः यत् पुण्यं तद्वदस्व मे ॥ १

मार्कण्डेय उवाच

निर्माल्यमपनीयाथ तोयेन स्नाप्य केशवम्।
नरसिंहाकृतिं राजन् सर्वपापैः प्रमुच्यते॥ २

सर्वतीर्थफलं प्राप्य यानारूढो दिवं व्रजेत् ।
श्रीविष्णोः सदनं प्राप्य मोदते कालमक्षयम् ॥ ३

आगच्छ नरसिंहेति आवाह्याक्षतपुष्पकैः ।
एतावताऽपि राजेन्द्र सर्वपापैः प्रमुच्यते ॥ ४

दत्वाऽऽसनमथार्घ्यं च पाद्यमाचमनीयकम् ।
देवदेवस्य विधिना सर्वपापैः प्रमुच्यते ॥ ५

स्नाप्य तोयेन पयसा नरसिंहं नराधिप।
सर्वपापविनिर्मुक्तो विष्णुलोके महीयते ॥ ६

स्नाप्य दध्ना सकृद् यस्तु निर्मलः प्रियदर्शनः ।
विष्णुलोकमवाप्नोति पूज्यमानः सुरोत्तमैः ॥ ७

यः करोति हरेरर्चां मधुना स्नापयन् नरः ।
अग्निलोके स मोदित्वा पुनर्विष्णुपुरे वसेत् ॥ ८

घृतेन स्नपनं यस्तु स्नानकाले विशेषतः ।
नरसिंहाकृतेः कुर्याच्छङ्खभेरीनिनादितम् ॥ ९

पापकञ्चुकमुन्मुच्य यथा जीर्णमहिस्त्वचम् ।
दिव्यं विमानमास्थाय विष्णुलाके महीयते ॥ १०

पञ्चगव्येन देवेशं यः स्नापयति भक्तितः ।
मन्त्रपूर्वं महाराज तस्य पुण्यमनन्तकम् ॥ ११

यश्च गोधूमकैश्चूर्णैः उद्वर्त्योष्णेन वारिणा।
प्रक्षाल्य देवदेवेशं वारुणं लोकमाप्नुयात् ॥ १२
पादपीठं तु यो भक्त्या बिल्वपत्रैर्निघर्षितम्।
उष्णांबुना च प्रक्षाल्य सर्वपापैः प्रमुच्यते ॥ १३
कुशपुष्पोदकैः स्नात्वा ब्रह्मलोकमवाप्नुयात्।
रत्नोदकेन सावित्रं कौबेरं हेमवारिणा ॥
नारसिंहं तु संस्नाप्य कर्पूरागरुवारिणा ॥ १४
इन्द्रलोके स मोदित्वा पश्चाद् विष्णुपुरे वसेत्।
पुष्पोदकेन गोविन्दं स्नाप्य भक्त्या नरोत्तमः ॥ १५
सावित्रं लोकमासाद्य विष्णुलोके महीयते ।
वस्त्राभ्यामर्चनं भक्त्या परिधाप्य हरिं हरेः ॥ १६
सोमलोके रमित्वा च विष्णुलोके महीयते ।
कुङ्कुमागरुश्रीखण्डकर्दमैरच्युताकृतिम् ॥ १७
आलिप्य भक्त्या राजेन्द्र कल्पकोटि वसेद् दिवि।
मल्लिकामालतीजातिकेतक्यशोकचम्पकैः ॥ १८
पुन्नागनागबकुलैः पद्मैरुत्पलजातिभिः ।
तुलसीकरवीरैश्च पालाशैः सानुकुम्बकैः ॥ १९
एतैरन्यैश्च कुसुमैः प्रशस्तैरच्युतं नरः ।
अर्चयेद् दशसुवर्णस्य प्रत्येकं फलमाप्नुयात् ॥ २०
मालां कृत्वा यथालाभमेतेषां विष्णुमर्चयेत् ।
कल्पकोटिसहस्राणि कल्पकोटिशतानि च ॥ २१
दिव्यं विमानमास्थाय विष्णुलोके स मोदते।
नरसिंहं तु यो भक्त्या विल्वपत्रैरखण्डितैः ॥ २२
निच्छिद्रैः पूजयेद् यस्तु तुलसीभिः समन्वितम्।
सर्वपापविनिर्मुक्तः सर्वभूषण भूषितः ॥ २३
काञ्चनेन विमानेन विष्णुलोके महीयते ।
माहिषाज्यं गुग्गुलं यः आज्ययुक्तं सशर्करम् ॥ २४

धूपं ददाति राजेन्द्र नरसिंहस्य भक्तिमान् ।
धूपितैः सर्वदिग्भ्यस्तु सर्वपापविवर्जितः ॥ २५
अप्सरोगणसंकीर्णविमानेन विराजते ।
वायुलोके स मोदित्वा पश्चाद् विष्णुपुरं व्रजेत् ॥ २६
घृतेन वाऽथ तैलेन दीपं प्रज्वालयेन्नरः ।
विष्णवे विधिवद् भक्त्या तस्य पुण्यफलं शृणु ॥ २७
विहाय पापकलिलं सहस्रादित्यसप्रभः ।
ज्योतिष्मता विमानेन विष्णुलोकं स गच्छति ॥ २८
हविः शाल्योदनं विद्वान् आज्ययुक्तं सशर्करम् ।
निवेद्य नरसिंहाय यावकं पायसं तथा ॥ २९
समास्तण्डुलसंख्याया यावतीस्तावतीर्नृप ।
विष्णुलोके महाभोगान् भुञ्जन्नास्ते स वैष्णवः ॥ ३०
बलिना वैष्णवेनाथ तृप्ताः सन्तो दिवौकसः ।
शान्तिं तस्य प्रयच्छन्ति श्रियमारोग्यमेव च ॥ ३१
प्रदक्षिणेन चैकेन देवदेवस्य भक्तितः ।
कृतेन यत् फलं नृणां तच्छृणुष्व नृपात्मज ॥ ३२
पृथ्वीप्रदक्षिणफलं प्राप्य विष्णुपुरे वसेत् ।
नमस्कारः कृतो येन भक्त्या वै माधवस्य च ॥ ३३
धर्मार्थकाममोक्षाख्यं फलं तेनाप्तमञ्जसा ।
स्तोत्रैर्जपैश्च देवाग्रे यः स्तौति मधुसूदनम् ॥ ३३A
सर्वपापविनिर्मुक्तो विष्णुलाके महीयते ।
गीतवाद्यादिकं नाट्यं शङ्खतूर्यादिनिःस्वनैः ॥ ३४
यः कारयति वै विष्णोः स याति मन्दिरं नरः ।
पर्वकाले विशेषेण कामगः कामरूपवान् ॥ ३५
सुसङ्गीतविदैश्चैव सेव्यमानोऽप्सरोगणैः ।
महार्हमणिचित्रेण विमानेन विराजिता ॥ ३६

स्वर्गात् स्वर्गमनुप्राप्य विष्णुलाके महीयते।
ध्वजं तु विष्णवे यस्तु गरुडेन समन्वितम् ।। ३७
दद्यात् सोऽपि ध्वजाकीर्णविमानेन विराजता।
विष्णुलोकमवाप्नोति सेव्यमानोऽप्सरोगणैः ।। ३८
सुवर्णाभरणैर्दिव्यैर्हारकेयूरकुण्डलैः ।
मुकुटाभरणाद्यैश्च यो विष्णुं पूजयेन्नृप ।। ३८A
सर्वपापविनिर्मुक्तः सर्वभूषणभूषितः ।
इन्द्रलोके वसेद् धीमान् यावदिन्द्राश्चतुर्दश ।। ३८B
यो गां पयस्विनीं विष्णोः कपिलां संप्रयच्छति।
आराध्य तमथाग्रे तु यत्किञ्चिद् दुग्धमुत्तमम् ।। ३८C
तद् दत्वा नरसिंहाय विष्णलोके महीयते ।
पितरस्तस्य मोदन्ते श्वेतद्वीपे चिरं नृप ।। ३९
एवं यः पूजयेद् राजन् नरसिंहं नरोत्तमः।
तस्य स्वर्गापवर्गौ तु भवतो नात्र संशयः ।। ४०
यत्रैवं पूज्यते विष्णुः नरसिंहो नरैर्नृप ।
न तत्र व्याधिदुर्भिक्षराजचौरादिकं भयम् ।। ४१
नरसिंहं समाराध्य विधिनाऽनेन माधवम् ।
नानास्वर्गसुखं भुक्त्वा न भूयः स्तनपो भवेत् ।। ४२
नित्यं सर्पिस्तिलैर्होमो ग्रामे यस्मिन् प्रवर्तते।
न भवेत् तस्य ग्रामस्य भयं वा तत्र कुत्रचित् ।। ४३
अनावृष्टिर्महामारी दोषा नो दाहका नृप ।
नरसिंहं समाराध्य ब्राह्मणैर्वेदपारगैः ।। ४४
कारयेल्लक्षहोमं तु ग्रामे यत्र पुराधिपः ।
कृते तस्मिन् मयोक्ते तु आगच्छति न तद्भयम् ।। ४५
दुष्टोपसर्गमरणं प्रजानामात्मनश्च हि।
सम्यगाराधनीया तु नरसिंहस्य मन्दिरे ।। ४६

शङ्करायतने चापि कोटिहोमं नराधिप ।
कारयेत् संयतैर्विप्रैः सभोजसदक्षिणैः ।। ४७
कृते तस्मिन् नृपश्रेष्ठ नरसिंहप्रसादतः ।
उपसर्गादिमरणं प्रजानामुपशाम्यति ।। ४८
दुःस्वप्नदर्शने घोरे ग्रहपीडासु चात्मनः ।
होमं च भोजनं चैव तस्य दोषः प्रणश्यति ।। ४९
अयने विषुवे चैव चन्द्रसूर्यग्रहे तथा ।
नरसिंहं समाराध्य लक्षहोमं तु कारयेत् ।। ५०
शान्तिर्भवति राजेन्द्र तस्य तत्स्थानवासिनाम् ।
एवमादिफलोपेतं नरसिंहार्चनं नृपः ।। ५१
कुरु त्वं भूपतेः पुत्र यदि वाञ्छसि सद्गतिम् ।
अतः परतरं नास्ति स्वर्गमोक्षफलप्रदम् ।। ५२
नरेन्द्रैः सुकरं कर्तुं देवदेवस्य पूजनम् ।
सन्त्यरण्ये ह्यमूल्यानि पत्रपुष्पाणि शाखिनाम् ।। ५३
तोयं नदीतडागेषु देवः साधारणः स्थितः ।
मनो नियमयेदेकं विद्यासाधनकर्मणि ।।
मनो नियमितं येन मुक्तिस्तस्य करे स्थिता ।। ५४

मार्कण्डेय उवाच

इत्येवमुक्तं भृगुचोदितेन मया तवेहार्चनमच्युतस्य ।
दिने दिने त्वं कुरु विष्णुपूजां वदस्व चान्यत् कथयामि किं ते ।। ५५

श्रीनरसिंहपुराणे सहस्रानीक चरिते श्रीविष्णोः
पूजाविधिर्नाम चतुस्त्रिंशोऽध्यायः

---

श्रीः

## ।। श्रीनृसिंहाष्टोत्तरशतनामस्तोत्रम् ।।

श्रीनृसिंहो महासिंहो दिव्यसिंहो महाबलः ।
उग्रसिंहो महादेव उपेन्द्रश्चाग्निलोचनः ।। १

रौद्रश्शौरिर्महावीरस्सुविक्रमपराक्रमः ।
हरिकोलाहलः चक्री विजयश्चाजयोऽव्ययः ।। २

दैत्यान्तकः परब्रह्माप्यघोरो घोरविक्रमः ।
ज्वालामुखो ज्वालमाली महाज्वालो महाप्रभुः ।। ३

निटिलाक्षस्सहस्राक्षो दुर्निरीक्ष्यः प्रतापनः ।
महादंष्ट्रायुधः प्राज्ञो हिरण्यकनिषूदनः ।। ४

चण्डकोपी सुरारिघ्नः सदार्तिघ्नस्सदाशिवः ।
गुणभद्रो महाभद्रो बलभद्रस्सुभद्रकः ।। ५

कराळो विकराळश्च गतायुस्सर्वकर्तृकः ।
भैरवाडम्बरो दिव्यश्चागम्यस्सर्वशत्रुजित् ।। ६

अमोघास्त्रश्शस्त्रधरस्सव्यजूटस्सुरेश्वरः ।
सहस्रबाहुर्वज्रनखस्सर्वसिद्धिर्जनार्दनः ।। ७

अनन्तो भगवान् स्थूलश्चागम्यश्च परावरः ।
सर्वमन्त्रैकरूपश्च सर्वयन्त्रविदारणः ।। ८

अव्ययः परमानन्दः कालजित् खगवाहनः ।
भक्तातिवत्सलोऽव्यक्तस्सुव्यक्तस्सुलभश्शुचिः ।। ९

लोकैकनायकस्सर्वश्शरणागतवत्सलः ।
धीरो धरश्च सर्वज्ञो भीमो भीमपराक्रमः ।। १०

देवप्रियो नुतः पूज्यो भवहृत् परमेश्वरः ।
श्रीवत्सवक्षाः श्रीवासो विभुस्सङ्कर्षणः प्रभुः ॥ ११

त्रिविक्रमस्त्रिलोकात्मा कालस्सर्वेश्वरेश्वरः ।
विश्वंभरः स्थिराभार्श्चाच्युतः पुरुषोत्तमः ॥ १२

अधोक्षजोऽक्षयस्सेव्यो वनमाली प्रकम्पनः ।
गुरुर्लोकगुरुस्स्रष्टा परंज्योतिः परायणः ॥ १३

ज्वालाहोबिलमालोलक्रोडाकारञ्जभार्गवाः ।
योगानन्दश्छत्रवटः पावनो नवमूर्तयः ॥ १४

॥ श्रीनृसिंहाष्टोत्तरशतनामस्तोत्रं संपूर्णम् ॥

---

श्रीः

## ॥ श्रीनृसिंहाष्टोत्तरशतनामावलिः ॥

ओं श्रीनृसिंहाय नमः
महासिंहाय
दिव्यसिंहाय
महाबलाय
उग्रसिंहाय
महादेवाय
उपेन्द्राय
अग्निलोचनाय
रौद्राय
शौरये १०
महावीराय
सुविक्रमपराक्रमाय

ओं हरिकोलाहलाय नमः
चक्रिणे
विजयाय
अजयाय
अव्ययाय
दैत्यान्तकाय
परब्रह्मणे
अघोराय २०
घोरविक्रमाय
ज्वालामुखाय
ज्वालमालिने
महाज्वालाय

ओं महाप्रभवे नमः
निटिलाक्षाय
सहस्राक्षाय
दुर्निरीक्ष्याय
प्रतापनाय
महादंष्ट्रायुधाय ३०
प्राज्ञाय
हिरण्यकनिषूदनाय
चण्डकोपिने
सुरारिघ्नाय
सदार्तिघ्नाय
सदाशिवाय
गुणभद्राय
महाभद्राय
बलभद्राय
सुभद्रकाय ४०
कराळाय
विकराळाय
गतायुषे
सर्वकर्तृकाय
भैरवाडम्बराय
दिव्याय
अगम्याय
सर्वशत्रुजिते
अमोघास्त्राय
शस्त्रधराय ५०

ओं सव्यजूटाय नमः
सुरेश्वराय
सहस्रबाहवे
वज्रनखाय
सर्वसिद्धये
जनार्दनाय
अनन्ताय
भगवते
स्थूलाय ६०
अगम्याय
परावराय
सर्वमन्त्रैकरूपाय
सर्वयन्त्रविदारणाय
अव्ययाय
परमानन्दाय
कालजिते
खगवाहनाय
भक्तातिवत्सलाय
अव्यक्ताय ७०
सुव्यक्ताय
सुलभाय
शुचये
लोकैकनायकाय
सर्वाय
शरणागतवत्सलाय
धीराय

ओं धराय नमः
सर्वज्ञाय
भीमाय
भीमपराक्रमाय ८०
देवप्रियाय
नुताय
पूज्याय
भवहृते
परमेश्वराय
श्रीवत्सवक्षसे
श्रीवासाय
विभवे
सङ्कर्षणाय
प्रभवे ९०
त्रिविक्रमाय
त्रिलोकात्मने
ओं कालाय नमः
सर्वेश्वरेश्वराय
विश्वंभराय
स्थिराभार्याय
अच्युताय
पुरुषोत्तमाय
अधोक्षजाय
अक्षयाय १००
सेव्याय
वनमालिने
प्रकम्पनाय
गुरवे
लोकगुरवे
स्रष्ट्रे
परस्मै ज्योतिषे
ओं परायणाय नमः १०८

ओं श्रीलक्ष्मीनृसिंहपरब्रह्मणे नमः
ओं भक्ताभीष्टफलप्रदस्वामिने नमः

॥ श्रीनृसिंहाष्टोत्तरशतनामावलिः समाप्ता ॥

ஸ்ரீ:

ஸ்ரீலக்ஷ்மீந்ரஸிம்ஹபரப்ரஹ்மணே நம:

# ஸ்ரீந்ருஸிம்ஹாஷ்டோத்தர சதநாம ஸ்தோத்ரம்

நாரஸிம்ஹோ மஹாஸிம்ஹோ திவ்யஸிம்ஹோ மஹாபல: ।
உக்ரஸிம்ஹோ மஹாதேவ: உபேந்த்ரஶ்சாக்நிலோசந: ॥ 1

ரௌத்ர: ஶௌரிர் மஹாவீர: ஸுவிக்ரமபராக்ரம: ।
ஹரிகோலாஹலஶ் சக்ரீ விஜயஶ்சாऽஜயோऽவ்யய: ॥ 2

தைத்யாந்தக: பரப்ரஹ்மாப்யகோரோ கோரவிக்ரம: ।
ஜ்வாலாமுகோ ஜ்வாலமாலீ மஹாஜ்வாலோ மஹாப்ரபு: ॥ 3

நிடிலாக்ஷஸ் ஸஹஸ்ராக்ஷோ துர்நிரீக்ஷ்ய: ப்ரதாபந: ।
மஹாதம்ஷ்ட்ராயுத: ப்ராஜ்ஞோ ஹிரண்யக நிஷூதந: ॥ 4

சண்டகோபீ ஸுராரிக்ந: ஸதார்த்திக்நஸ் ஸதாஶிவ: ।
குணபத்ரோ மஹாபத்ரோ பலபத்ரஸ் ஸுபத்ரக: ॥ 5

கராளோ விகராளஶ்ச கதாயுஸ் ஸர்வகர்த்ருக: ।
பைரவாடம்பரோ திவ்யஶ் சாகம்யஸ் ஸர்வஶத்ருஜித் ॥ 6

அமோகாஸ்த்ரஶ் ஶஸ்த்ரதர: ஸவ்யஜூடஸ் ஸுரேஶ்வர: ।
ஸஹஸ்ரபாஹுர் வஜ்ரநக: ஸர்வஸித்திர் ஜநார்தந: ॥ 7

அநந்தோ பகவாந் ஸ்தூலஶ் சாகம்யஶ்ச பராவர: ।
ஸர்வமந்த்ரைகரூபஶ்ச ஸர்வயந்த்ரவிதாரண: ॥ 8

அவ்யய: பரமாநந்த: காலஜித் ககவாஹந: ।
பக்தாதிவத்ஸலோऽவ்யக்த: ஸுவ்யக்த: ஸுலப: ஶுசி: ॥ 9

லோகைகநாயகஸ் ஸர்வ: ஶரணாகதவத்ஸல: ।
தீரோ தரஶ்ச ஸர்வஜ்ஞோ பீமோ பீமபராக்ரம: ॥ 10

தேவப்ரியோ நுத: பூஜ்யோ பவஹ்ருத் பரமேஶ்வர: ।
ஸ்ரீவத்ஸவக்ஷா ஸ்ரீவாஸோ விபுஸ் ஸங்கர்ஷண: ப்ரபு: ॥ 11

த்ரிவிக்ரமஸ் த்ரிலோகாத்மா காலஸ் ஸர்வேஶ்வரேஶ்வர: ।
விஶ்வம்பர: ஸ்திராபார்யஶ்சாச்யுத: புருஷோத்தம: ॥ 12

அதோக்ஷஜோऽக்ஷயஸ் ஸேவ்யோ வநமாலீ ப்ரகம்பந: ।
குருர் லோககுரு: ஸ்ரஷ்டா பரஞ்ஜ்யோதி: பராயண: ॥ 13

ஜ்வாலாஹோபில மாலோல க்ரோடாகாரஞ்ஜ பார்கவா: ।
யோகாநந்தஶ் சத்ரவட: பாவநோ நவ மூர்த்தய: ॥

ஸ்ரீந்ருஸிம்ஹாஷ்டோத்தர ஶதநாமஸ்தோத்ரம் ஸம்பூர்ணம்

# ஶ்ரீந்ருஸிம்ஹாஷ்டோத்தர சதநாமாவளி:

ஓம் நாரஸிம்ஹாய நம:
மஹாஸிம்ஹாய
திவ்யஸிம்ஹாய
மஹாபலாய
உக்ரஸிம்ஹாய
மஹாதேவாய
உபேந்த்ராய
அக்நிலோசநாய
ரௌத்ராய
ஶௌரயே 10
மஹாவீராய
ஸுவிக்ரமபராக்ரமாய
ஹரிகோலாஹலாய
சக்ரிணே
விஜயாய
அஜயாய
அவ்யயாய
தைத்யாந்தகாய
பரப்ரஹ்மணே
அகோராய 20
கோரவிக்ரமாய
ஜ்வாலாமுகாய
ஜ்வாலமாலிநே
மஹாஜ்வாலாய
மஹாப்ரபவே
நிடிலாக்ஷாய
ஸஹஸ்ராக்ஷாய
துர்நிரீக்ஷ்யாய
ப்ரதாபநாய
மஹாதம்ஷ்ட்ராய 30
ப்ராஜ்ஞாய
ஹிரண்யகநிஷூதநாய
சண்டகோபிநே

ஓம் ஸுராரிக்நாய நம:
ஸுதார்த்திநாய
ஸதாஶிவாய
குணபத்ராய
மஹாபத்ராய
பலபத்ராய
ஸுபத்ரகாய 40
கராளாய
விகராளாய
கதாயுஷே
ஸர்வகர்த்ருகாய
பைரவாடம்பராய
திவ்யாய
அகம்யாய
ஸர்வஶத்ருஜிதே
அமோகாஸ்த்ராய
ஶஸ்த்ரதராய 50
ஸவ்யஜூடாய
ஸுரேஶ்வராய
ஸஹஸ்ரபாஹவே
வஜ்ரநகாய
ஸர்வஸித்தயே
ஜநார்த்தநாய
அநந்தாய
பகவதே
ஸ்தூலாய
அகம்யாய 60
பராவராய
ஸர்வமந்த்ரைகரூபாய
ஸர்வயந்த்ரவிதாரணாய
அவ்யாய
பரமாநந்தாய
காலஜிதே

ஓம் ககவாஹநாய நம:
பக்தாதிவத்ஸலாய
அவ்யக்தாய
ஸுவ்யக்தாய 70
ஸுலபாய
ஶுசயே
லோகைகநாயகாய
ஸர்வாய
ஶரணாகதவத்ஸலாய
தீராய
தராய
ஸர்வஜ்ஞாய
பீமாய
பீமபராக்ரமாய 80
தேவப்ரியாய
நுதாய
பூஜ்யாய
பவஹ்ருதே
பரமேஶ்வராய
ஸ்ரீவத்ஸவக்ஷஸே
ஸ்ரீவாஸாய

ஓம் விபவே நம:
ஸங்கர்ஷணாய
ப்ரபவே 90
த்ரிவிக்ரமாய
த்ரிலோகாத்மநே
காலாய
ஸர்வேஶ்வரேஶ்வராய
விஶ்வம்பராய
ஸ்திராபார்யாய
அச்யுதாய
புருஷோத்தமாய
அதோக்ஷஜாய
அக்ஷயாய 100
ஸேவ்யாய
வநமாலிநே
ப்ரகம்பநாய
குரவே
லோககுரவே
ஸ்ரஷ்ட்ரே
பரஸ்மை ஜ்யோதிஷே
பராயணாய நம:

ஸ்ரீலக்ஷ்மீந்ருஸிம்ஹ பரப்ரஹ்மணே நம:
பக்தாபீஷ்ட பலப்ரதஸ்வாமிநே நம:

ஸ்ரீந்ருஸிம்ஹாஷ்டோத்தர ஶதநாமாவளி முற்றிற்று

---

# ॥ श्रीलक्ष्मीनृसिंहसहस्रनामस्तोत्रम् ॥

मार्कण्डेय उवाच—

एवं युद्धमभूद् घोरं रौद्रं दैत्यबलैस्सह ।
नृसिंहस्याङ्गसंभूतैः नारसिंहैरनेकशः ॥ १
दैत्यकोटीर्हतास्तत्र केचिद्भीताः पलायिताः ।
तं दृष्ट्वाऽतीव संक्रुद्धो हिरण्यकशिपुः स्वयम् ॥ २
भूतपूर्वैरमृत्युर्मे इति ब्रह्मवरोद्धतः ।
ववर्ष शरवर्षेण नारसिंहो भृशं बली ॥ ३
द्वन्द्वयुद्धमभूदुग्रं दिव्यवर्षसहस्रकम् ।
दैत्येन्द्रे साहसं दृष्ट्वा देवाश्चेन्द्रपुरोगमाः ॥ ४
श्रेयः कस्य भवेदत्र इति चिन्तापरा भवन् ।
तदा क्रुद्धो नृसिंहस्तु दैत्येन्द्रप्रहितान्यपि ॥ ५
विष्णुचक्रं महाचक्रं कालचक्रं तु वैष्णवम् ।
रौद्रं पाशुपतं ब्राह्मं कौबेरं कुलिशासनम् ॥ ६
आग्नेयं वारुणं सौम्यं मोहनं सौरपार्वतम् ।
भार्गवादिबहून्यस्त्राण्यभक्षयत कोपनः ॥ ७
सन्ध्याकाले सभाद्वारे स्वाङ्के निक्षिप्य भैरवः ।
ततः खड्गधरं दैत्यं जग्राह नरकेसरी ॥ ८
हिरण्यकशिपोर्वक्षो विदार्यातीव रोषितः ।
उद्धृत्य चान्त्रमालानि नखैर्वज्रसमप्रभैः ॥ ९
मेने कृतार्थमात्मानं सर्वतः पर्यवैक्षत ।
हर्षिता देवताः सर्वाः पुष्पवृष्टिमकारयन् ॥ १०
देवदुन्दुभयो नेदुर्विमलाश्च दिशाऽभवन् ।
नरसिंहमतीवोग्रं विकीर्णवदनं भृशम् ॥ ११
लेलिहानं च गर्जन्तं कालानलसमप्रभम् ।
अतिरौद्रं महाकायं महादंष्ट्रं महारुतम् ॥ १२

महासिंहं महारूपं दृष्ट्वा संक्षुभितं जगत्।
सर्वदेवगणैस्सार्धं तत्रागत्य पितामहः ॥ १३
आगन्तुकैर्भूतपूर्वैः वर्तमानैरनुत्तमैः ।
गुणैर्नामसहस्रेण तुष्टाव श्रुतिसम्मतैः ॥ १४

ओं नमः श्रीमद्दिव्यलक्ष्मीनृसिंहसहस्रनाम स्तोत्रमहामन्त्रस्य ब्रह्मा ऋषिः, श्रीलक्ष्मीनृसिंहो देवता, अनुष्टुप् छन्दः, श्रीनृसिंहः परमात्मा बीजं, लक्ष्मीर्माया शक्तिः, जीवो बीजं, बुद्धिः शक्तिः, उदानवायुः बीजं, सरस्वती शक्तिः, व्यञ्जनानि बीजानि, स्वराः शक्तयः, ओं क्ष्रौं ह्रीं इति बीजानि, ओं श्रीं अं आं इति शक्तयः, विकीर्णनखदंष्ट्रायुधायेति कीलकम्, अकारादिति बोधकं, श्रीलक्ष्मीनृसिंहप्रसादसिद्ध्यर्थे श्रीलक्ष्मीनृसिंहसहस्रनामस्तोत्रमहामन्त्रजपे विनियोगः ।

## अथ हृदयादिन्यासः

ओं श्रीलक्ष्मीनृसिंहाय नमः अङ्गुष्ठाभ्यां नमः ।
ओं वज्रनखाय नमः तर्जनीभ्यां नमः ।
ओं महारुद्राय नमः मध्यमाभ्यां नमः ।
ओं सर्वतोमुखाय नमः अनामिकाभ्यां नमः ।
ओं विकटास्याय नमः कनिष्ठिकाभ्यां नमः ।
ओं वीराय नमः करतलकरपृष्ठाभ्यां नमः ।

एवं हृदयादिन्यासः

## अथ दिग्बन्धः

ओं ऐन्द्रीं दिशं सुदर्शनेन बध्नामि नमश्चक्राय स्वाहा ।
ओं आग्नेयीं दिशं सुदर्शनेन बध्नामि नमश्चक्राय स्वाहा ।
ओं याम्यां दिशं सुदर्शनेन बध्नामि नमश्चक्राय स्वाहा ।
ओं नैऋतीं दिशं सुदर्शनेन बध्नामि नमश्चक्राय स्वाहा ।
ओं वारुणीं दिशं सुदर्शनेन बध्नामि नमश्चक्राय स्वाहा ।
ओं कौबेरीं दिशं सुदर्शनेन बध्नामि नमश्चक्राय स्वाहा ।
ओं ऐशानीं दिशं सुदर्शनेन बध्नामि नमश्चक्राय स्वाहा ।

ओं ऊर्ध्वां दिशं सुदर्शनेन बध्नामि नमश्चक्राय स्वाहा ।
ओं अधस्ताद्दिशं सुदर्शनेन बध्नामि नमश्चक्राय स्वाहा ।
अथ ध्यानम्

सत्यज्ञानसुखस्वरूपममलं क्षीराब्धिमध्ये स्थितं
योगारूढमतिप्रसन्नवदनं भूषासहस्रोज्ज्वलम् ।
त्र्यक्षं चक्रपिनाकसाभयकरान् बिभ्राणमर्कच्छविं
छत्रीभूतफणीन्द्रमिन्दुधवलं लक्ष्मीनृसिंहं भजे ॥ १

उपास्महे नृसिंहाख्यं ब्रह्म वेदान्तगोचरम् ।
भूयो लालितसंसार च्छेदहेतुं जगद्गुरुम् ॥ २

ब्रह्मोवाच :—
ॐ ह्रीं श्रीं ऐं क्ष्रौं
ॐ नमो नारसिंहाय वज्रदंष्ट्राय वज्रिणे ।
वज्रदेहाय वज्राय नमो वज्रनखाय च ॥ १
वासुदेवाय वन्द्याय वरदाय वरात्मने ।
वरदाभयहस्ताय वराय वररूपिणे ॥ २
वरेण्याय वरिष्ठाय श्रीवराय नमो नमः ।
प्रह्लादवरदायैव प्रत्यक्षवरदाय च ॥ ३
परात्परपरेशाय पवित्राय पिनाकिने ।
पावनाय प्रसन्नाय पाशिने पापहारिणे ॥ ४
पुरुतुष्टाय पुण्याय पुरुहूताय ते नमः ।
तत्पुरुषाय तथ्याय पुराणपुरुषाय च ॥ ५
पुरोधसे पूर्वजाय पुष्कराक्षाय ते नमः ।
पुष्पहासाय हासाय महाहासाय शार्ङ्गिणे ॥ ६
[illegible]य सिंहराजाय जगद्वश्याय ते नमः ।
अट्टहासाय रोषाय जलवासाय ते नमः ॥ ७
भूतावासाय भासाय श्रीनिवासाय खड्गिने ।
खड्गजिह्वाय सिंहाय खड्गवासाय ते नमः ॥ ८

नमो मूलाधिवासाय धर्मवासाय धन्विने ।
धनञ्जयाय धन्याय नमो मृत्युञ्जयाय च ॥ ९

शुभंजयाय सूत्राय नमश्शत्रुञ्जयाय च ।
निरञ्जनाय नीराय निर्गुणाय गुणाय च ॥ १०

निष्प्रपञ्चाय निर्वाणप (प्र) दाय निबिडाय च ।
निरालम्बाय नीलाय निष्कलाय कलाय च ॥ ११

निमेषाय निबन्धाय निमेषगमनाय च ।
निर्द्वन्द्वाय निराशाय निश्चयाय निराय च ॥ १२

निर्मलाय निबन्धाय निर्मोहाय निराकृते ।
नमो नित्याय सत्याय सत्कर्मनिरताय च ॥ १३

सत्यध्वजाय मुञ्जाय मुञ्जकेशाय केशिने ।
हरीशाय च शेषाय गुडाकेशाय वै नमः ॥ १४

सुकेशायोर्ध्वकेशाय केशिसंहारकाय च ।
जलेशाय स्थलेशाय पद्मेशायोग्ररूपिणे ॥ १५

कुशेशयाय कूलाय केशवाय नमो नमः ।
सूक्तिकर्णाय सूक्ताय रक्तजिह्वाय रागिणे ॥ १६

दीप्तरूपाय दीप्ताय प्रदीप्ताय प्रलोभिने ।
प्रच्छिन्नाय प्रबोधाय प्रभवे विभवे नमः ॥ १७

प्रभञ्जनाय पान्थाय प्रमायाप्रमिताय च ।
प्रकाशाय प्रतापाय प्रज्वालोज्वलाय च ॥ १८

ज्वालामालास्वरूपाय ज्वलज्जिह्वाय ज्वालिने ।
महोज्ज्वलाय कालाय कालमूर्तिधराय च ॥ १९

कालान्तकाय कल्पाय कलनाय कृते नमः ।
कालचक्राय शक्राय वषट्चक्राय चक्रिणे ॥ २०

अक्रूराय कृतान्ताय विक्रमाय क्रमाय च ।
कृतिने कृत्तिवासाय कृतज्ञाय कृतात्मने ॥ २१

संक्रमाय च क्रुद्धाय क्रान्तलोकत्रयाय च।
अरूपाय स्वरूपाय हरये परमात्मने ॥ २२

अजयायादिदेवाय अक्षयाय क्षयाय च।
अघोराय सुघोराय घोरघोरतराय च ॥ २३

नमोऽस्त्वघोरवीर्याय लसद्घोराय ते नमः।
घोराध्यक्षाय दक्षाय दक्षिणार्याय शम्भवे ॥ २४

अमोघाय गुणौघाय अनघायाघहारिणे।
मेघनादाय नादाय तुभ्यं मेघात्मने नमः ॥ २५

मेघवाहनरूपाय मेघश्यामाय मालिने।
व्यालयज्ञोपवीताय व्याघ्रदेहाय वै नमः ॥ २६

व्याघ्रपादाय च व्याघ्रकर्मिणे व्यापकाय च।
विकटास्याय वीराय विष्टरश्रवसे नमः ॥ २७

विकीर्णनखदंष्ट्राय नखदंष्ट्रायुधाय च।
विष्वक्सेनाय सेनाय विह्वलाय बलाय च ॥ २८

विरूपाक्षाय वीराय विशेषाक्षाय साक्षिणे।
वीतशोकाय विस्तीर्णवदनाय नमो नमः ॥ २९

विधानाय विधेयाय विजयाय जयाय च।
विबुधाय विभावाय नमो विश्वम्भराय च ॥ ३०

वीतरागाय विप्राय विटङ्कनयनाय च।
विपुलाय विनीताय विश्वयोने नमो नमः ॥ ३१

विडम्बनाय वित्ताय विश्रुताय वियोनये।
विह्वलाय विवादाय नमो व्याहृतये नमः ॥ ३२

विलासाय विकल्पाय महाकल्पाय ते नमः।
बहुकल्पाय कल्पाय कल्पातीताय शिल्पिने ॥ ३३

कल्पनाय स्वरूपाय फणितल्पाय वै नमः।
तटित्प्रभाय तार्या (क्ष्यी) य तरुणाय तरस्विने ॥ ३४

तपनयान्तरिक्षाय तापत्रयहराय च।
तारकाय तमोघ्नाय तत्त्वाय च तपस्विने ॥ ३५
तक्षकाय तनुत्राय तटिने तरलाय च।
शतरूपाय शान्ताय शतधाराय ते नमः ॥ ३६
शतपत्रायताक्षाय स्थितये शतमूर्तये ।
शतक्रतुस्वरूपाय शाश्वताय शतात्मने ॥ ३७
नमः सहस्रशिरसे सहस्रवदनाय च ।
सहस्राक्षाय देवाय दिशाश्रोत्राय ते नमः ॥ ३८
नमः सहस्रजिह्वाय महाजिह्वाय ते नमः ।
सहस्रनामधेयाय सहस्रजठराय च ॥ ३९
सहस्रबाहवे तुभ्यं सहस्रचरणाय च।
सहस्रार्कप्रकाशाय सहस्रायुधधारिणे ॥ ४०
नमः स्थूलाय सूक्ष्माय सुसूक्ष्माय नमो नमः ।
सुक्षुण्णाय सुभिक्षाय सुराध्यक्षाय शौरिणे ॥ ४१
धर्माध्यक्षाय धर्माय लोकाध्यक्षाय वै नमः ।
प्रजाध्यक्षाय शिक्षायै विपक्षक्षयमूर्तये ॥ ४२
कालाध्यक्षाय तीक्ष्णाय मूलाध्यक्षाय ते नमः ।
अधोक्षजाय मित्राय सुमित्रावरुणाय च ॥ ४३
शत्रुघ्नाय अविघ्नाय विघ्नकोटिहराय च।
रक्षोघ्नाय तमोघ्नाय भूतघ्नाय नमो नमः ॥ ४४
भूतपालाय भूताय भूतावासाय भूतये ।
भूतवेतालघाताय भूताधिपतये नमः ॥ ४५
भूतग्रहविनाशाय भूतसंयमिने नमः ।
महाभूताय भृगवे सर्वभूतात्मने नमः ॥ ४६
सर्वारिष्टविनाशाय सर्वसंपत्कराय च।
सर्वाधाराय सर्वाय सर्वार्तिहरये नमः ॥ ४७

सर्वदुःखप्रशान्ताय सर्वसौभाग्यदायिने ।
सर्वज्ञायाप्यनन्ताय सर्वशक्तिधराय च ॥ ४८

सर्वैश्वर्यप्रदात्रे च सर्वकार्यविधायिने ।
सर्वज्वरविनाशाय सर्वरोगापहारिणे ॥ ४९

सर्वाभिचारहन्त्रे च सर्वैश्वर्यविधायिने (सर्वोत्पातविघातिने) ।
पिङ्गाक्षायैकशृङ्गाय द्विशृङ्गाय मरीचये ॥ ५०

बहुशृङ्गाय शृङ्गाय महाशृङ्गाय ते नमः ।
माङ्गल्याय मनोज्ञाय मन्तव्याय महात्मने ॥ ५१

महादेवाय देवाय मातुलिङ्गधराय च ।
महामायाप्रसूताय प्रस्तुताय च मायिने ॥ ५२

अनन्तानन्तरूपाय मायिने जलशायिने ।
महोदराय मन्दाय मदनाय मदाय च ॥ ५३

मधुकैटभहन्त्रे च माधवाय मुरारये ।
महावीर्याय धैर्याय चित्रवीर्याय ते नमः ॥ ५४

चित्रकू(क)र्माय चित्राय नमस्ते चित्रभानवे ।
मायातीताय मायायै महावीराय ते नमः ॥ ५५

महातेजाय बीजाय तेजोधाम्ने च बीजिने ।
तेजोमयनृसिंहाय (तेजसां निधये नमः) नमस्ते चित्रभानवे ॥ ५६

महादंष्ट्राय तुष्टाय नमः पुष्टिकराय च ।
शिपिविष्टाय हृष्टाय पुष्टाय परमेष्ठिने ॥ ५७

विशिष्टाय च शिष्टाय गरिष्ठायेष्टदायिने ।
नमो ज्येष्ठाय श्रेष्ठाय तुष्टायामिततेजसे ॥ ५८

अष्टाङ्गव्यस्तरूपाय सर्वदुष्टान्तकाय च ।
वैकुण्ठाय विकुण्ठाय केशिकण्ठाय ते नमः (कण्ठिने) ॥ ५९

कण्ठीरवाय लुण्ठाय निश्शठाय हठाय च ।
सत्त्वोद्रिक्ताय कृष्णाय ऋग्यजुस्सामगाय च ॥ ६०

ऋतुध्वजाय वज्राय मन्त्रराजाय मन्त्रिणे ।
त्रिनेत्राय त्रिवर्गाय त्रिधाम्ने च त्रिशूलिने ॥ ६१
त्रिकालज्ञानरूपाय त्रिदेहाय त्रिधात्मने ।
नमस्त्रिमूर्तिवन्द्याय त्रितत्त्वज्ञानिने नमः ॥ ६२
अक्षोभ्यायानिरुद्धाय अप्रमेयाय भानवे ।
अमृताय अनन्ताय अमितायामितौजसे ॥ ६३
अपमृत्युविनाशाय अपस्मारविघातिने ।
अन्नदायान्नरूपाय अन्नायान्नभुजे नमः ॥ ६४
नाद्याय निरवद्याय वेद्यायाद्भुतकर्मणे ।
सद्योजाताय सद्धा (न्ध्या) य वैद्युताय नमो नमः ॥ ६५
अध्वातीताय सत्त्वाय वागतीताय वाग्मिने ।
वागीश्वराय गोपाय गोहिताय गवांपते ॥ ६६
गन्धर्वाय गभीराय गर्जितायोर्जिताय च ।
पर्जन्याय प्रबुद्धाय प्रधानपुरुषाय च ॥ ६७
पद्माभाय सुनाभाय पद्मनाभाय मानिने ।
पद्मनेत्राय पद्माय पद्मायाः पतये नमः ॥ ६८
पद्मोदराय पूताय पद्मकल्पोद्भवाय च ।
नमो हृत्पद्मवासाय भूपद्मोद्धरणाय च ॥ ६९
शब्दब्रह्मस्वरूपाय ब्रह्मरूपधराय च ।
ब्रह्मणे ब्रह्मरूपाय पद्मनेत्राय ते नमः ॥ ७०
ब्रह्मदाय ब्राह्मणाय ब्रह्मब्रह्मात्मने नमः ।
सुब्रह्मण्याय देवाय ब्रह्मण्याय त्रिवेदिने ॥ ७१
परब्रह्मस्वरूपाय पञ्चब्रह्मात्मने नमः ।
नमस्ते ब्रह्मशिरसे तथाश्वशिरसे नमः ॥ ७२
अथर्वशिरसे नित्यमशनिप्रमिताय च ।
नमस्ते तीक्ष्णदंष्ट्राय लोलाय ललिताय च ॥ ७३

लावण्याय लविन्नाय नमस्ते भासकाय च।
लक्षणज्ञाय लक्ष्याय लक्षणाय नमो नमः ॥ ७४
लसद्दीप्ताय लिप्ताय विष्णवे प्रभविष्णवे ।
वृष्णिमूलाय कृष्णाय श्रीमहाविष्णवे नमः ॥ ७५
पश्यामि त्वां महासिंहं हारिणं वनमालिनम्।
किरीटिनं कुण्डलिनं सर्वाङ्गं सर्वतोमुखम् ॥ ७६
सर्वतः पाणिपादोरुं सर्वतोऽक्षिशिरोमुखम्।
सर्वेश्वरं सदातुष्टं समर्थं समरप्रियम् ॥ ७७
बहुयोजनविस्तीर्णं बहुयोजनमायतम् ।
बहुयोजनहस्ताङ्घ्रिं बहुयोजननासिकम् ॥ ७८
महारूपं महावक्त्रं महादंष्ट्रं महाभुजम् ।
महानादं महारौद्रं महाकायं महाबलम् ॥ ७९
आनाभेर्ब्रह्मणो रूपं आगलद्वैष्णवं तथा।
अशीर्षाद्रुद्रमीशानं तदग्रे सर्वतश्शिवम् ॥ ८०
नमोऽस्तु नारायण नारसिंह नमोऽस्तु नारायण वीरसिंह।
नमोऽस्तु नारायण क्रूरसिंह नमोऽस्तु नारायण दिव्यसिंह ॥ ८१
नमोऽस्तु नारायण व्याघ्रसिंह नमोऽस्तु नारायण पुच्छसिंह।
नमोऽस्तु नारायण पूर्णसिंह नमोऽस्तु नारायण रौद्रसिंह ॥ ८२
नमो नमो भीषण भद्रसिंह नमो नमो विज्वल नेत्रसिंह ।
नमो नमो बृंहित भूतसिंह नमो नमो निर्मलचित्रसिंह ॥ ८३
नमो नमो निर्जित कालसिंह नमो नमः कल्पित कल्पसिंह।
नमो नमः कामद कामसिंह नमो नमस्ते भुवनैकसिंह ॥ ८४
द्यावापृथिव्योरिदमन्तरं हि व्याप्तं त्वयैकेन दिशश्च सर्वाः ।
दृष्ट्वाद्भुतं रूपमुग्रं तवेदं लोकत्रयं प्रव्यथितं महात्मन् ॥ ८५
अमी हि त्वा सुरसङ्घा विशन्ति केचिद्भीताः प्राञ्जलयो गृणन्ति।
स्वस्तीत्युक्त्वा मुनयः सिद्धसङ्घाः स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः

रुद्रादित्या वसवो ये च साध्याः विश्वेदेवा मरुतश्चोष्मपाश्च ।
गन्धर्वयक्षासुरसिद्धसङ्घाः वीक्षन्ति त्वां विस्मिताश्चैव सर्वे ॥ ८७

लेलिह्यसे ग्रसमानस्समन्तात् लोकान् समग्रान् वदनैर्ज्वलद्भिः ।
तेजोभिरापूर्य जगत्समग्रं भासस्तवोग्राः प्रतपन्ति विष्णो ॥ ८८

भविष्णुस्त्वं सहिष्णुस्त्वं भ्राजिष्णुर्जिष्णुरेव च ।
पृथिवी ह्यन्तरिक्षं त्वं पर्वतारण्यमेव च ॥ ८९

कलाकाष्ठाविलिप्तस्त्वं मुहूर्तप्रहरादिकम् ।
अहोरात्रं त्रिसन्ध्यं च पक्षमासर्तुवत्सराः ॥ ९०

युगादिर्युगभेदस्त्वं संयुगो युगसन्धयः ।
नित्यं नैमित्तिकं दैनं महाप्रलयमेव च ॥ ९१

करणं कारणं कर्ता भर्ता हर्ता त्वमीश्वरः । (हरिः स्वराट्)
सत्कर्ता सत्कृतिर्गोप्ता सच्चिदादन्दविग्रहः ॥ ९२

प्राणस्त्वं प्राणिनां प्रत्यगात्मा त्वं सर्वदेहिनाम् ।
सुज्योतिस्त्वं परंज्योतिः आत्मज्योतिः सनातनः ॥ ९३

ज्योतिर्लोकस्वरूपस्त्वं ज्योतिर्ज्ञः ज्योतिषां पतिः ।
स्वाहाकारः स्वधाकारो वषट्कारः कृपाकरः ॥ ९४

हन्तकारो निराकारो वेदाकारश्च शंकरः ।
अकारादिहकारान्त ओंकारो लोककारकः ॥ ९५

एकात्मा त्वमनेकात्मा चतुरात्मा चतुर्भुजः ।
चतुर्मूर्तिश्चतुर्दंष्ट्रः चतुर्वेदमयोत्तमः ॥ ९६

लोकप्रियो लोकगुरुः लोकेशो लोकनायकः ।
लोकसाक्षी लोकपतिः लोकात्मा लोकलोचनः ॥ ९७

लोकाधारो बृहल्लोको लोकालोकमयो विभुः ।
लोककर्ता विश्वकर्ता कृतावर्तः कृतागमः ॥ ९८

अनादिस्त्वमनन्तस्त्वं अभूतो भूतविग्रहः ।
स्तुतिः स्तुत्यः स्तवप्रीतः स्तोता नेता नियामकः ॥ ९९

त्वं गतिस्त्वं मतिर्मह्यं पिता माता गुरुः सखा ।
सुहृदश्चात्म (प्त) रूपस्त्वं त्वां विना नास्ति मे गतिः ॥ १००
नमस्ते मन्त्ररूपाय अस्त्ररूपाय ते नमः ।
बहुरूपाय रूपाय पञ्चरूपधराय च ॥ १०१
भद्ररूपाय रूढा (पा) य योगरूपाय योगिने ।
समरूपाय योगाय योगपीठस्थिताय च ॥ १०२
योगगम्याय सौम्याय ध्यानगम्याय ध्यायिने ।
ध्येयगम्याय धाम्ने च धर्माधिपतये नमः ॥ १०३
धराधराय धर्माय धारणाभिरताय च ।
नमो धात्रे च संधात्रे विधात्रे च धराय च ॥ १०४
दामोदराय दान्ताय दानवान्तकराय च ।
नमः संसारवैद्याय भेषजाय नमो नमः ॥ १०५
सीरध्वजाय शीताय वातायाप्रमिताय च ।
सारस्वताय संसारनाशनायाक्षमालिने ॥ १०६
असिचर्मधरायैव षट्कर्मनिरताय च ।
विकर्माय सुकर्माय परकर्मविघातिने ॥ १०७
सुशर्मणे मन्मथाय नमो वर्माय वर्मिणे ।
करिचर्मवसानाय करालवदनाय च ॥ १०८
कवये पद्मगर्भाय भूतगर्भ घृणानिधे ।
ब्रह्मगर्भाय गर्भाय बृहद्गर्भाय धूर्जटे ॥ १०९
नमस्ते विश्वगर्भाय श्रीगर्भाय जितारये ।
नमो हिरण्यगर्भाय हिरण्यकवचाय च ॥ ११०
हिरण्यवर्णदेहाय हिरण्याक्षविनाशिने ।
हिरण्यकशिपोर्हन्त्रे हिरण्यनयनाय च ॥ १११
हिरण्यरेतसे तुभ्यं हिरण्यवदनाय च ।
नमो हिरण्यशृङ्गाय निश्शृङ्गाय च शृङ्गिणे ॥ ११२

भैरवाय सुकेशाय भीषणायान्त्रमालिने।
चण्डाय तुण्डमालाय नमो दण्डधराय च॥ ११३
अखण्डतत्त्वरूपाय कमण्डुलुधराय च।
नमस्ते खण्डसिंहाय सत्यसिंहाय ते नमः॥ ११४
नमस्ते श्वेतसिंहाय पीतसिंहाय ते नमः।
नीलसिंहाय नीलाय रक्तसिंहाय ते नमः॥ ११५
नमो हारिद्रसिंहाय धूम्रसिंहाय ते नमः।
मूलसिंहाय मूलाय बृहत्सिंहाय ते नमः॥ ११६
पातालस्थितसिंहाय नमः पर्वतवासिने।
नमो जलस्थसिंहाय अन्तरिक्षस्थिताय च॥ ११७
कालाग्निरुद्रसिंहाय चण्डसिंहाय ते नमः।
अनन्तसिंह (जिह्व) सिंहाय अनन्तगतये नमः॥ ११८
नमो विचित्रसिंहाय बहुसिंहस्वरूपिणे।
अभयंकरसिंहाय नरसिंहाय ते नमः॥ ११९
नमोऽस्तु सिंहराजाय नारसिंहाय ते नमः।
सप्ताब्धिमेखलायैव सप्तसामस्वरूपिणे॥ १२०
सप्तलोकान्तरस्थाय सप्तस्वरमयाय च।
सप्तार्चारूपदंष्ट्राय सप्ताश्वरथरूपिणे॥ १२१
सप्तवायुस्वरूपाय सप्तच्छन्दोमयाय च।
स्वच्छाय स्वच्छरूपाय स्वच्छन्दाय च ते नमः॥ १२२
श्रीवत्साय सुवेषाय श्रुतये श्रुतिमूर्तये।
शुचिश्रवाय शूराय सुप्रभा (भोगा) य सुधन्विने॥ १२३
शुभ्राय सुरनाथाय सुलभाय शुभाय च।
सुदर्शनाय सूक्ष्मा (क्ता) य निरुक्ताय नमो नमः॥ १२४
सुप्रभावस्वभावाय भवाय विभवाय च।
सुशाखाय विशाखाय सुमुखाय सुखाय च॥ १२५

सुनखाय सुदंष्ट्राय सुरथाय सुधाय च।
सांख्याय सुरमुख्याय प्रख्याताय प्रभाय च॥ १२६

नमः खट्वाङ्गहस्ताय खेटमुद्गरपाणये।
खगेन्द्राय मृगेन्द्राय नागेन्द्राय दृढाय (ध्रुवाय) च॥ १२७

नागकेयूरहाराय नागेन्द्रायाघमर्दिने ।
नदीवासाय नग्नाय नानारूपधराय च॥ १२८

नागेश्वराय नागाय नमिताय नराय च।
नागान्तकरथायैव नरनारायणाय च॥ १२९

नमो मत्स्यस्वरूपाय कच्छपाय नमो नमः ।
नमो यज्ञवराहाय नरसिंहाय ते नमः ॥ १३०

विक्रमाक्रान्तलोकाय वामनाय महौजसे।
नमो भार्गवरामाय रावणान्तकराय च॥ १३१

नमस्ते बलरामाय कंसप्रध्वंसकारिणे।
बुद्धाय बुद्धरूपाय तीक्ष्णरूपाय कल्किने ॥ १३२

आत्रेयायाग्निनेत्राय कपिलाय द्विजाय च।
क्षेत्राय पशुपालाय पशुवक्त्राय ते नमः ॥ १३३

गृहस्थाय वनस्थाय यतये ब्रह्मचारिणे ।
स्वर्गापवर्गदात्रे च तद्धोक्त्रे च मुमुक्षवे॥ १३४

शालग्रामनिवासाय क्षीराब्धिशयनाय च।
श्रीशैलाद्रिनिवासाय शिला (शैल)वासाय ते नमः॥ १३५

योगिहृत्पद्मवासाय महाहासाय (हंसाय) ते नमः।
गुहावासाय गुह्याय गुप्ताय गुरवे नमः ॥ १३६

नमो मूलाधिवासाय नीलवस्त्रधराय च।
पीतवस्त्राय शस्त्राय रक्तवस्त्रधराय च॥ १३७

रक्तमालाविभूषाय रक्तगन्धानुलेपने।
धुरन्धराय धूर्ताय दुर्धराय धराय च॥ १३८

दुर्मदाय दुरन्ताय दुर्धराय नमा नमः ।
दुर्निरीक्षाय निष्ठाय (दीप्ताय) दुर्दर्शाय द्रुमाय च ।। १३९
दुर्भेदाय दुराशाय दुर्लभाय नमो नमः ।
दृप्ताय दीप्तवक्त्राय अदृप्तनयनाय च ।। १४०
उन्मत्ताय प्रमत्ताय नमो दैत्यारये नमः ।
रसज्ञाय रसेशाय आरक्तरसनाय (आकर्णनयनाय) च ।। १४१
पथ्याय परितोषाय रथ्याय रसिकाय च ।
ऊर्ध्वकेशोर्ध्वरूपाय नमस्ते चोर्ध्वरेतसे ।। १४२
ऊर्ध्वसिंहाय सिंहाय नमस्ते चोर्ध्वबाहवे ।
परप्रध्वंसकायैव शङ्खचक्रधराय च ।। १४३
गदापद्मधरायैव पञ्चबाणधराय च ।
कामेश्वराय कामाय कामपालाय कामिने ।। १४४
नमः कामविहाराय कामरूपधराय च ।
सोमसूर्याग्निनेत्राय सोमपाय नमो नमः ।। १४५
नमः सोमाय वामाय वामदेवाय ते नमः ।
सामस्वनाय सौम्याय भक्तिगम्याय वै नमः ।। १४६
कूष्माण्डगणनाथाय सर्वश्रेयस्कराय च ।
भीष्माय भीकरायैव भीमविक्रमणाय च ।। १४७
मृगग्रीवाय जीवाय जितायाजितकाशिने ।
जटिने जामदग्न्याय नमस्ते जातवेधसे ।। १४८
जपाकुसुमवर्णाय जप्याय जपिताय च ।
जरायुजायाण्डजाय स्वेदजायोद्भिज्जाय च ।। १४९
जनार्दनाय रामाय जाह्नवीजनकाय च ।
जराजन्मादिदूराय प्रद्युम्नाय प्रमोदिने ।। १५०
जिह्वारौद्राय रुद्राय वीरभद्राय ते नमः ।
चिद्रूपाय समुद्राय कद्रुद्राय प्रचेतसे ।। १५१

इन्द्रियायेन्द्रियज्ञाय नमोऽस्त्विन्द्रानुजाय च ।
अतीन्द्रियाय सान्द्राय इन्दिरापतये नमः ॥ १५२
ईशानाय च ईड्याय ईशि (प्सि) ताय इनाय च ।
व्योमात्मने च व्योम्ने च नमस्ते व्योमकेशिने ॥ १५३
व्योमाधाराय च व्योमवक्त्रायासुरघातिने ।
नमस्ते व्योमदंष्ट्राय व्योमावासाय ते नमः ॥ १५४
सुकुमाराय माराय शुभाचाराय वै नमः ।
विश्वाय विश्वरूपाय नमो विश्वात्मकाय च ॥ १५५
ज्ञानात्मकाय ज्ञानाय विश्वेशाय परात्मने ।
एकात्मने नमस्तुभ्यं नमस्ते द्वादशात्मने ॥ १५६
चतुर्विंशतिरूपाय पञ्चविंशति मूर्तये ।
षड्विंशकात्मने नित्यं सप्तविंशतिकात्मने ॥ १५७
धर्मार्थकाममोक्षाय विर (विमु) क्ताय नमो नमः ।
भावशुद्धाय सिद्धाय साध्याय शरभाय च ॥ १५८
प्रबोधाय सुबोधाय नमो बुद्धिप्रियाय (प्रदाय) च ।
स्निग्धाय च विदग्धाय मुक्ताय मुनये नमः ॥ १५९
प्रियंवदाय (प्रियश्रवाय) श्रव्याय स्रुक्स्रुवाय श्रिताय च ।
गृहेशाय महेशाय ब्रह्मेशाय नमो नमः ॥ १६०
श्रीधराय सुतीर्थाय हयग्रीवाय ते नमः ।
उग्राय उग्रवेगाय उग्रकर्मरताय च ॥ १६१
उग्रनेत्राय व्यग्राय समग्रगुणशालिने ।
बालग्रहविनाशाय पिशाचग्रहविघातिने ॥ १६२
दुष्टग्रहनिहन्त्रे च निग्रहानुग्रहाय च ।
वृषध्वजाय वृष्ण्याय वृषाय वृषभाय च ॥ १६३
उग्रश्रवाय शान्ताय नमः श्रुतिधराय च ।
नमस्ते देवदेवेश नमस्ते मधुसूदन ॥ १६४

नमस्ते पुण्डरीकाक्ष नमस्ते दुरितक्षय ।
नमस्ते करुणासिन्धो नमस्ते समितिञ्जय ॥ १६५

नमस्ते नरसिंहाय नमस्ते गरुडध्वज ।
यज्ञनेत्र नमस्तेऽस्तु कालध्वज जयध्वज ॥ १६६

अग्निनेत्र नमस्तेऽस्तु नमस्ते ह्यमरप्रिय ।
महानेत्र नमस्तेऽस्तु नमस्ते भक्तवत्सल ॥ १६७

धर्मनेत्र नमस्तेऽस्तु नमस्ते करुणाकर ।
पुण्यनेत्र नमस्तेऽस्तु नमस्तेऽभीष्टदायक ॥ १६८

नमो नमस्ते जयसिंहरूप नमो नमस्ते नरसिंहरूप ।
नमो नमस्ते रणसिंहरूप नमो नमस्ते नरसिंहरूप ॥ १६९

उद्धृत्य (उद्वृत्तं) गर्वितं दैत्यं निहत्याजौ सुरद्विषम् ।
देवकार्यं महत्कृत्वा गर्जसे स्वात्मतेजसा ॥ १७०

अतिरौद्रमिदं रूपं दुस्सहं दुरतिक्रमम् ।
दृष्ट्वा तु शङ्किताः सर्वाः देवतास्त्वामुपागताः ॥ १७१

एतान् पश्य महेशानं ब्रह्माणं मां शचीपतिम् ।
दिक्पालान् द्वादशादित्यान् रुद्रानुरगराक्षसान् ॥ १७२

सर्वानृषिगणान् सप्त मातृगौरीं सरस्वतीम् ।
लक्ष्मीं नदीश्च तीर्थानि रतिं भूतगणान्यपि ॥ १७३

प्रसीद त्वं महासिंह उग्रभावमिमं त्यज ।
प्रकृतिस्थो भव त्वं हि शान्तभावं च धारय ॥ १७४

इत्युक्त्वा दण्डवद्भूमौ पपात स पितामहः ।
प्रसीद त्वं प्रसीद त्वं प्रसीदेति पुनः पुनः ॥ १७५

मार्कण्डेय उवाच

दृष्ट्वा तु देवताः सर्वाः श्रुत्वा तां ब्रह्मणो गिरम् ।
स्तोत्रेणापि च (तेन) संहृ (तु) ष्टः सौम्यभावमधारयत् ॥ १७६

अब्रवीन्नारसिंहस्तु वीक्ष्य सर्वान्सुरोत्तमान् ।
संत्रस्तान् भयसंविग्नान् शरणं समुपागतान् ॥ १७७

श्रीनृसिंह उवाच

भो भो देववराः (गणाः) सर्वे पितामहपुरोगमाः ।
शृणुध्वं मम वाक्यं च भवन्तु विगतज्वराः ॥ १७८
यद्धितं भवतां नूनं तत् करिष्यामि सांप्रतम् ।
एवं नामसहस्रं मे त्रिसन्ध्यं यः पठेच्छुचिः ॥ १७९
शृणोति वा श्रावयति पूजान्ते भक्तिसंयुतः ।
सर्वान् कामानवाप्नोति जीवेच्च शरदां शतम् ॥ १८०
यो नामभिर्नृसिंहाद्यैरर्चयेत् क्रमशो मम ।
सर्वतीर्थेषु यत्पुण्यं सर्वतीर्थेषु यत्फलम् ॥ १८१
सर्वपूजासु यत्प्रोक्तं तत्सर्वं लभते भृशम् ।
जातिस्मरत्वं लभते ब्रह्मज्ञानं सनातनम् ॥ १८२
सर्वपापविनिर्मुक्तः तद्विष्णोः परमं पदम् ।
मन्नामकवचं बद्ध्वा विचरेद्विगतज्वरः ॥ १८३
भूतवेतालकूष्माण्डपिशाचब्रह्मराक्षसाः ।
शाकिनीडाकिनीज्येष्ठानीलीबालग्रहादिकाः ॥ १८४
दुष्टग्रहाश्च नश्यन्ति यक्षराक्षसपन्नगाः ।
ये च संध्याग्रहाः सर्वे चाण्डालग्रहसंज्ञिकाः ॥ १८५
निशाचरग्रहाः सर्वे प्रणश्यन्ति च दूरतः ।
कुक्षिरोगश्च हृद्रोगः शूलापस्मार एव च ॥ १८६
ऐहिकं द्व्याहिकं च चातुर्थिकमथ ज्वरम् ।
आधयो व्याधयस्सर्वे रोगा रोगाधिदेवताः ॥ १८७
शीघ्रं नश्यन्ति ते सर्वे नृसिंहस्मरणात्सुराः ।
राजानो दासतां यान्ति शत्रवो यान्ति मित्रताम् ॥ १८

जलानि स्थलतां यान्ति वह्नयो यान्ति शीतताम् ।
विषाण्यप्यमृतायन्ति नृसिंहस्मरणात्सुराः ॥ १८९
राज्यकामो लभेद्राज्यं धनकामो लभेद्धनम् ।
विद्याकामो लभेद्विद्यां बद्धो मुच्येत बन्धनात् ॥ १९०
व्यालव्याघ्रभयं नास्ति चोरसर्पादिकं (जं) तथा ।
अनुकूला भवेद्भार्या लोकैश्च प्रति (परि) पूज्यते ॥ १९१
सुपुत्रान् धनधान्यं च भवन्ति विगतज्वराः । (पशूंश्च विविधानि च)
एतत्सर्वं समाप्नोति नृसिंहस्य प्रसादतः ॥ १९२
जलसन्तरणे चैव पर्वतारण्यमेव (रोहणेऽपि) च ।
वनेऽपि विचरन्मर्त्यः दुर्गमे विषमे पथि ॥ १९३
कलि (बिल) प्रवेशने चापि नारसिंहं न विस्मरेत् ।
ब्रह्मघ्नश्च पशुघ्नश्च भ्रूणहा गुरुतल्पगः ॥ १९४
मुच्यते सर्वपापेभ्यः कृतघ्नः स्त्रीविघातकः ।
वेदानां दूषकश्चापि मातापितृविनिन्दकः ॥ १९५
असत्यस्तु तथा यज्ञनिन्दको लोकनिन्दकः ।
स्मृत्वा सकृन्नृसिंहं तु मुच्यते सर्वकिल्बिषैः ॥ १९६
बहुनाऽत्र किमुक्तेन स्मृत्वा मां शुद्धमानसः ।
यत्र यत्र चरेन्मर्त्यः नृसिंहस्तत्र गच्छति ॥ १९७
गच्छन् तिष्ठन् स्वपन् भुञ्जन् जाग्रन्नपि हसन्नपि ।
नृसिंहेति नृसिंहेति नृसिंहेति सदा स्मरन् ॥ १९८
पुमान्न लिप्यते पापैर्भुक्तिं मुक्तिं च विन्दति ।
नारी सुभगतामेति सौभाग्यञ्च सुरूपताम् ॥ १९९
भर्तुः प्रियत्वं लभते न वैधव्यं च विन्दति ।
न सपत्नीं च जन्मान्ते सम्यग् ज्ञानी भवेद् द्विजः ॥ २००
भूमिप्रदक्षिणान्मर्त्यो यत्फलं लभते चिरात् ।
तत्फलं लभते नारसिंहमूर्तिप्रदक्षिणात् ॥ २०१

मार्कण्डेय उवाच

इत्युक्त्वा देवदेवेशो लक्ष्मीमालिङ्ग्य लीलया ।
प्रह्लादस्याभिषेकं तु ब्रह्मणे चोपदिष्टवान् ॥ २०२
श्रीशैलस्य प्रसादे तु लोकानां च हिताय वै ।
स्वरूपं स्थापयामास प्रकृतिस्थोऽभवत्तथा ॥ २०३
ब्रह्मापि दैत्यराजानं प्रह्लादमभ्यषेचयत् ।
दैवतैः सह सुप्रीतो ह्यात्मलोकं ययौ स्वयम् ॥ २०४
हिरण्यकशिपोर्भीत्या प्रपलाय्य शचीपतिः ।
स्वर्गराज्यात् परिभ्रष्टो युगानामेकविंशतिम् ॥ २०५
नृसिंहेन हते दैत्ये स्वर्गलोकमवाप सः ।
दिक्पालाश्च सुसंप्राप्ताः स्वस्वस्थानमनुत्तमम् ॥ २०६
धर्मे मतिः समस्तानां प्रजानामभवत्तदा ।
एवं नामसहस्रं मे ब्रह्मणा निर्मितं पुरा ॥ २०७
पुत्रानध्यापयामास सनकादीन् महामतिः (मुनीन्) ।
ऊचुस्ते च ततः सर्वे लोकानां हितकाम्यया ॥ २०८
देवता ऋषयः सिद्धाः यक्षविद्याधरोरगाः ।
गन्धर्वाश्च मनुष्याश्च इहामुत्र फलैषिणः ॥ २०९
अस्य स्तोत्रस्य पाठाद्धि विशुद्धमनसोऽभवन् ।
सनत्कुमारः संप्राप्तो भारद्वाजो महामतिः ॥ २१०
तस्मादङ्गिरसः प्राप्तस्तस्मात्प्राप्तो महाक्रतुः ।
जग्राह भार्गवस्तस्मात् अग्निमित्राय सोऽब्रवीत् ॥ २११
जैगीषव्याय स प्राह सोऽब्रवीत् च्यवनाय च ।
तस्मादवाप शाण्डिल्यो गर्गाय प्राह वै मुनिः ॥ २१२
क्र (ऋ) तुञ्जयाय स प्राह जातूकर्णाय संयमी ।
विष्णुवृद्धाय सोऽप्याह सोऽपि बोधायनाय च ॥ २१३
क्रमात् स विष्णवे प्राह स प्राहोद्दामकुक्षये ।
सिंहतेजाश्च तस्माच्च श्रीप्रियाय ददौ च सः ॥ २१४

उपदिष्टोऽस्मि तेनाहं इदं नामसहस्रकम्।
तत्प्रसादादमृत्युर्मे यस्मात्कस्मात् भयं न हि ॥ २१५
मया च कथितं नारसिंहस्तोत्रमिदं तव।
त्वं हि नित्यं शुचिर्भूत्वा तमाराधय शाश्वतम् ॥ २१६
सर्वभूताश्रयँ देवं नृसिंहं भक्तवत्सलम् ।
पूजयित्वा स्तवं जप्त्वा हुत्वा निश्चलमानसः ॥ २१७
प्राप्स्यसे महतीं सिद्धिं सर्वान् कामान् वरोत्तमान्।
अयमेव परो धर्मस्त्विदमेव परं तपः ॥ २१८
इदमेव परं ज्ञानं इदमेव महद् व्रतम् ।
अयमेव सदाचारः त्वयमेव सदा (महा) मखः ॥ २१९
इदमेव त्रयो वेदाः सच्छात्राण्यागमानि च।
नृसिंहमन्त्रादन्यच्च वैदिकं तु न विद्यते ॥ २२०
यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित् ।
कथितं ते नृसिंहस्य चरितं पापनाशनम् ॥ २२१
सर्वमन्त्रमयं तापत्रयोपशमनं परम् ।
सर्वार्थसाधनं दिव्यं किं भूयः श्रोतुमिच्छसि ॥ २२२

इति श्रीनृसिंहपुराणे नृसिंहप्रादुर्भावे मन्त्रराज सर्वार्थसाधनं दिव्यं
आपदुद्धारक श्रीमद्दिव्यलक्ष्मीनृसिंहसहस्रनामस्तोत्रं नाम
द्विशततमोऽध्यायः संपूर्णः ॥

श्रीः

## ॥ श्रीलक्ष्मीनृसिंहसहस्रनामावलिः ॥

ओं ह्रीं श्रीं ऐं क्ष्रौं नारसिंहाय नमः

वज्रदंष्ट्राय
वज्रिणे
वज्रदेहाय
वज्राय
वज्रनखय
वासुदेवाय
वन्द्याय
वरदाय
वरात्मने १०
वरदाभयहस्ताय
वराय
वररूपिणे
वरेण्याय
वरिष्ठाय
श्रीवराय
प्रह्लादवरदाय
प्रत्यक्षवरदाय
परात्परपरेशाय
पवित्राय २०
पिनाकिने
पावनाय
प्रसन्नाय
पाशिने

ओं पापहारिणे नमः
पुरुष्टुताय
पुण्याय
पुरुहूताय
तत्पुरुषाय
तथ्याय ३०
पुराणपुरुषाय
पुरोधसे
पूर्वजाय
पुष्कराक्षाय
पुष्पहासाय
हासाय
महाहासाय
शार्ङ्गिणे
सिंहाय
सिंहराजाय ४०
जगद्वश्याय
अट्टहासाय
रोषाय
जलवासाय
भूतावासाय
भासाय
श्रीनिवासाय
खड्गिने

ओं खड्गजिह्वाय नमः
सिंहाय ५०
खड्गावासाय
मूलाधिवासाय
धर्मवासाय
धन्विने
धनञ्जयाय
धन्याय
मृत्युञ्जयाय
शुभञ्जयाय
सूत्राय
शत्रुञ्जयाय ६०
निरञ्जनाय
नीराय
निर्गुणाय
गुणाय
निष्प्रपञ्चाय
निर्वाणप (प्र) दाय
निबिडाय
निरालम्बाय
नीलाय
निष्कलाय ७०
कलायै
निमेषाय
निबन्धाय
निमेषगमनाय
निर्द्वन्द्वाय

ओं निराशाय नमः
निश्चयाय
निराय
निर्मलाय
निबन्धाय ८०
निर्मोहाय
निराकृते
नित्याय
सत्याय
सत्यकर्मनिरताय
सत्यध्वजाय
मुञ्जाय
मुञ्जिकेशाय
केशिने
हरीशाय ९०
शेषाय
गुडाकेशाय
सुकेशाय
ऊर्ध्वकेशाय
केशिसंहारकाय
जलेशाय
स्थलेशाय
पद्मेशाय
उग्ररूपाय
कुशेशयाय १००
कूलाय
केशवाय

ओं सूक्तिकर्णाय नमः
सूक्ताय
रक्तजिह्वाय
रागिणे
दीप्तरूपाय
दीप्ताय
प्रदीप्ताय
प्रलोभिने ११०
प्रच्छिन्नाय
प्रबोधाय
प्रभवे
विभवे
प्रभञ्जनाय
पान्थाय
प्रमायाप्रमिताय
प्रकाशाय
प्रतापाय
प्रज्वलाय १२०
उज्ज्वलाय
ज्वालामालास्वरूपाय
ज्वलज्जिह्वाय
ज्वालिने
महोज्ज्वलाय
कालाय
कालमूर्तिधराय
कालान्तकाय
कल्पाय

ओं कलनाय नमः १३०
कृते
कालचक्राय
शक्राय
वषट्चक्राय
चक्रिणे
अक्रूराय
कृतान्ताय
विक्रमाय
क्रमाय
कृतिने १४०
कृत्तिवाससे
कृतज्ञाय
कृतात्मने
संक्रमाय
क्रुद्धाय
क्रान्तलोकत्रयाय
अरूपाय
स्वरूपाय
हरये
परमात्मने १५०
अजयाय
आदिदेवाय
अक्षयाय
क्षयाय
अघोराय
सुघोराय

ओं घोरघोरतराय नमः
अघोरवीर्याय
लसद्घोराय
घोराध्यक्षाय १६०
दक्षाय
दक्षिणाय
आर्याय
शम्भवे
अमोघाय
गुणौघाय
अनघाय
अघहारिणे
मेघनादाय
नादाय १७०
मेघात्मने
मेघवाहनरूपाय
मेघश्यामाय
मालिने
व्यालयज्ञोपवीताय
व्याघ्रदेहाय
व्याघ्रपादाय
व्याघ्रकर्मिणे
व्यापकाय
विकटास्याय १८०
वीराय
विष्टरश्रवसे
विकीर्णनखदंष्ट्राय

ओं नखदंष्ट्रायुधाय नमः
विष्वक्सेनाय
सेनाय
विह्वलाय
बलाय
विरूपाक्षाय
वीराय १९०
विशेषाक्षाय
साक्षिणे
वीतशोकाय
विस्तीर्णवदनाय
विधानाय
विधेयाय
विजयाय
जयाय
विबुधाय
विभावाय २००
विश्वंभराय
वीतरागाय
विप्राय
विटङ्कनयनाय
विपुलाय
विनीताय
विश्वयोनये
विडम्बनाय
वित्ताय
विश्रुताय २१०

ओं वियोनये नमः
विह्वलाय
विवादाय
व्याहृतये
विलासाय
विकल्पाय
महाकल्पाय
बहुकल्पाय
कल्पाय
कल्पातीताय २२०
शिल्पिने
कल्पनाय
स्वरूपाय
फणितल्पाय
तटित्प्रभाय
तार्क्ष्याय
तरुणाय
तरस्विने
तपनाय
अन्तरिक्षाय २३०
तापत्रयहराय
तारकाय
तमोघ्नाय
तत्त्वाय
तपस्विने
तक्षकाय
तनुत्राय

ओं तटिने नमः
तरलाय
शतरूपाय २४०
शान्ताय
शतधाराय
शतपत्रायताक्षाय
स्थितये
शतमूर्तये
शतक्रतुस्वरूपाय
शाश्वताय
शतात्मने
सहस्रशिरसे
सहस्रवदनाय २५०
सहस्राक्षाय
देवाय
दिशाश्रोत्राय
सहस्रजिह्वाय
महाजिह्वाय
सहस्रनामधेयाय
सहस्रजठराय
सहस्रबाहवे
सहस्रचरणाय
सहस्रार्कप्रकाशाय २५०
सहस्रायुधधारिणे
स्थूलाय
सूक्ष्माय
सुसूक्ष्माय

ओं सुक्षुण्णाय नमः
सुभिक्षाय
सुराध्यक्षाय
शौरिणे
धर्माध्यक्षाय
धर्माय २७०
लोकाध्यक्षाय
प्रजाध्यक्षाय
शिक्षायै
विपक्षक्षयमूर्तये
कालाध्यक्षाय
तीक्ष्णाय
मूलाध्यक्षाय
अधोक्षजाय
मित्राय
सुमित्रावरुणाय २८०
शत्रुघ्नाय
अविघ्नाय
विघ्नकोटिहराय
रक्षोघ्नाय
तमोघ्नाय
भूतघ्नाय
भूतपालाय
भूताय
भूतावासाय
भूतये २९०
भूतवेतालघाताय

ओं भूताधिपतये नमः
भूतग्रहविनाशाय
भूतसंयमिने
महाभूताय
भृगवे
सर्वभूतात्मने
सर्वारिष्टविनाशाय
सर्वसंपत्कराय
सर्वाधाराय ३००
सर्वाय
सर्वार्तिहरये
सर्वदुःखप्रशान्ताय
सर्वसौभाग्यदायिने
सर्वज्ञाय
अनन्ताय
सर्वशक्तिधराय
सर्वैश्वर्यप्रदात्रे
सर्वकार्यविधायिने
सर्वज्वरविनाशाय ३१०
सर्वरोगापहारिणे
सर्वाभिचारहन्त्रे
सर्वैश्वर्यविधायिने
पिङ्गाक्षाय
एकश्रृङ्गाय
द्विश्रृङ्गाय
मरीचये
बहुश्रृङ्गाय

ओं श्रृङ्गाय नमः

महाश्रृङ्गाय ३२०
माङ्गल्याय
मनोज्ञाय
मन्तव्याय
महात्मने
महादेवाय
देवाय
मातुलिङ्गधराय
महामायाप्रसूताय
प्रस्तुताय
मायिने ३३०
अनन्ताय
अनन्तरूपाय
मायिने
जलशायिने
महोदराय
मन्दाय
मददाय
मदाय
मधुकैटभहन्त्रे
माधवाय ३४०
मुरारये
महावीर्याय
धैर्याय
चित्रवीर्याय
चित्रकू (क)र्माय

ओं चित्राय नमः

चित्रभानवे
मायातीताय
मायायै
महावीराय ३५०
महातेजसे
बीजाय
तेजोधाम्ने
बीजिने
तेजोमयनृसिंहाय
चित्रभानवे
महादंष्ट्राय
तुष्टाय
पुष्टिकराय
शिपिविष्टाय ३६०
हृष्टाय
पुष्टाय
परमेष्ठिने
विशिष्टाय
शिष्टाय
गरिष्ठाय
इष्टदायिने
ज्येष्ठाय
श्रेष्ठाय
तुष्टाय ३७०
अमिततेलसे
अष्टाङ्गव्यस्तरूपाय

ओं सर्वदुष्टान्तकाय नमः
वैकुण्ठाय
विकुण्ठाय
केशिकण्ठाय
कण्ठीरवाय
लुण्ठाय
निश्शठाय
हठाय ३८०
सत्त्वोद्रिक्ताय
कृष्णाय
ऋग्यजुस्सामाय
ऋतुध्वजाय
वज्राय
मन्त्रराजाय
मन्त्रिणे
त्रिनेत्राय
त्रिवर्गाय
त्रिधाम्ने ३९०
त्रिशूलिने
त्रिकालज्ञानरूपाय
त्रिदेहाय
त्रिधात्मने
त्रिमूर्तिवन्द्याय
त्रितत्त्वज्ञानिने
अक्षोभ्याय
अनिरुद्धाय
अप्रमेयाय

ओं भानवे नमः ४००
अमृताय
अनन्ताय
अमिताय
अमितौजसे
अपमृत्युविनाशाय
अपस्मारविघातिने
अन्नदाय
अन्नरूपाय
अन्नाय
अन्नभुजे ४१०
नाद्याय
निरवद्याय
विद्यायै
अद्भुतकर्मणे
सद्योजाताय
सङ्घा(न्ध्या) य
वैद्युताय
अध्वातीताय
सत्त्वाय
वागतीताय ४२०
वाग्मिने
वागीश्वराय
गोपाय
गोहिताय
गवां पतये
गन्धर्वाय

ओं गम्भीराय नमः
गर्जिताय
ऊर्जिताय
पर्जन्याय ४३०
प्रबुद्धाय
प्रधानपुरुषाय
पद्माभाय
सुनाभाय
पद्मनाभाय
मानिने
पद्मनेत्राय
पद्माय
पद्मायाः पतये
पद्मोदराय ४४०
पूताय
पद्मकल्पोद्भवाय
हृत्पद्मवासाय
भूपद्मोद्धरणाय
शब्दब्रह्मस्वरूपाय
ब्रह्मरूपधराय
ब्रह्मणे
ब्रह्मरूपाय
पद्मनेत्राय
ब्रह्मदाय ४५०
ब्राह्मणाय
ब्रह्मणे
ब्रह्मात्मने

ओं सुब्रह्मण्याय नमः
देवाय
ब्रह्मण्याय
त्रिवेदिने
परब्रह्मस्वरूपाय
परब्रह्मात्मने
ब्रह्मशिरसे ४६०
अश्वशिरसे
अथर्वशिरसे
नित्यमशनिप्रमिताय
तीक्ष्णदंष्ट्राय
लोलाय
ललिताय
लावण्याय
लवित्राय
भासकाय
लक्षणज्ञाय ४७०
लक्ष्याय
लक्षणाय
लसद्दीप्ताय
लिप्ताय
विष्णवे
प्रभविष्णवे
वृष्णिमूलाय
कृष्णाय
श्रीमहाविष्णवे
महासिंहाय ४८०

ओं हारिणे नमः
वनमालिने
किरीटिने
कुण्डलिने
सर्वाङ्गाय
सर्वतोमुखाय
सर्वतः पाणिपादोरसे
सर्वतोऽक्षिशिरोमुखाय
सर्वेश्वराय
सदा तुष्टाय ४९०
समर्थाय
समरप्रियाय
बहुयोजनविस्तीर्णाय
बहुयोजनमायताय
बहुयोजनहस्तांघ्रये
बहुयोजननासिकाय
महारूपाय
महावक्त्राय
महादंष्ट्राय
महाभुजाय ५००
महानादाय
महारौद्राय
महाकायाय
महाबलाय
आनाभेर्ब्रह्मणो रूपाय
आगलाद्वैष्णवाय
आशीर्षाद्रुद्रायेशानाय

ओं अग्रे सर्वतश्शिवाय नमः
नारायणनारसिंहाय
नारायणवीरसिंहाय ५१०
नारायणक्रूरसिंहाय
नारायणदिव्यसिंहाय
नारायणव्याघ्रसिंहाय
नारायणपुच्छसिंहाय
नारायणपूर्णसिंहाय
नारायणरौद्रसिंहाय
भीषणभद्रसिंहाय
विज्वलनेत्रसिंहाय
बृंहितभूतसिंहाय
निर्मलचित्रसिंहाय ५२०
निर्जितकालसिंहाय
कल्पितकल्पसिंहाय
कामदकामसिंहाय
भुवनैकसिंहाय
विष्णवे
भविष्णवे
सहिष्णवे
भ्राजिष्णवे
जिष्णवे
पृथिव्यै ५३०
अन्तरिक्षाय
पर्वताय
अरण्याय
कलाकाष्ठाविलिप्ताय

ओं मुहूर्तप्रहरादिकाय नमः
अहोरात्राय
त्रिसन्ध्यायै
पक्षाय
मासाय
ऋतवे ५४०
वत्सराय
युगादये
युगभेदाय
संयुगाय
युगसन्धये
नित्याय
नैमित्तिकाय
दैनाय
महाप्रळयाय
करणाय ५५०
कारणाय
कर्त्रे
भर्त्रे
हर्त्रे
ईश्वराय
सत्कर्त्रे
सत्कृतये
गोप्त्रे
सच्चिदानन्दविग्रहाय
प्राणिनां प्राणाय ५६०
सर्वदेहिनां प्रत्यगात्मने

ओं सुज्योतिषे नमः
परञ्ज्योतिषे
आत्मज्योतिषे
सनातनाय
ज्योतिषे
लोकस्वरूपाय
ज्योतिषे
ज्ञाय
ज्योतिषां पतये ५७०
स्वाहाकाराय
स्वधाकाराय
वषट्काराय
कृपाकराय
हन्तकाराय
निराकाराय
वेदाकाराय
शङ्कराय
अकारादिहकारान्ताय
ओंकाराय ५८०
लोककारकाय
एकात्मने
अनेकात्मने
चतुरात्मने
चतुर्भुजाय
चतुर्मूर्तये
चतुर्दंष्ट्राय
चतुर्वेदमयाय

ओं उत्तमाय नमः

लोकप्रियाय ५९०
लोकगुरवे
लोकेशाय
लोकनायकाय
लोकसाक्षिणे
लोकपतये
लोकात्मने
लोकलोचनाय
लोकाधाराय
बृहल्लोकाय
लोकालोकमयाय ६००
विभवे
लोककर्त्रे
विश्वकर्त्रे
कृतावर्ताय
कृतागमाय
अनादये
अनन्ताय
अभूताय
भूतविग्रहाय
स्तुतये ६१०
स्तुत्याय
स्तवप्रीताय
स्तोत्रे
नेत्रे
नियामकाय

ओं गतये नमः

मतये
पित्रे
मात्रे
गुरवे ६२०
सख्ये
सुहृदश्चात्मरूपाय
मन्त्ररूपाय
अस्त्ररूपाय
बहुरूपाय
रूपाय
पञ्चरूपधराय
भद्ररूपाय
रूढाय
योगरूपाय ६३०
योगिने
समरूपाय
योगाय
योगपीठस्थिताय
योगगम्याय
सौम्याय
ध्यानगम्याय
ध्यायिने
ध्येयगम्याय
धाम्ने ६४०
धामाधिपतये
धराधराय

ओं धर्माय नमः
धारणाभिरताय
धात्रे
सन्धात्रे
विधात्रे
धराय
दामोदराय
दान्ताय ६५०
दानवान्तकाय
संसारवैद्याय
भेषजाय
सीरध्वजाय
शीताय
वाताय
अप्रमिताय
सारस्वताय
संसारनाशनाय
अक्षमालिने ६६०
असिचर्मधराय
षट्कर्मनिरताय
विकर्माय
सुकर्माय
परकर्मविघातिने
सुशर्मणे
मन्मथाय
वर्माय
वर्मिणे

ओं करिचर्मवसनाय नमः ६७०
कराळवदनाय
कवये
पद्मगर्भाय
भूतगर्भाय
घृणानिधये
ब्रह्मगर्भाय
गर्भाय
बृहद्गर्भाय
धूर्जटये
विश्वगर्भाय ६८०
श्रीगर्भाय
जितारये
हिरण्यगर्भाय
हिरण्यकवचाय
हिरण्यवर्णदेहाय
हिरण्याक्षविनाशिने
हिरण्यकशिपोर्हन्त्रे
हिरण्यनयनाय
हिरण्यरेतसे
हिरण्यवदनाय ६९०
हिरण्यशृङ्गाय
निश्शृङ्गाय
शृङ्गिणे
भैरवाय
सुकेशाय
भीषणाय

ओं आन्त्रमालिने नमः
चण्डाय
तुण्डमालाय
दण्डधराय ७००
अखण्डतत्त्वरूपाय
कमण्डलुधराय
खण्डसिंहाय
सत्यसिंहाय
श्वेतसिंहाय
पीतसिंहाय
नीलसिंहाय
नीलाय
रक्तसिंहाय
हारिद्रसिंहाय ७१०
धूम्रसिंहाय
मूलसिंहाय
मूलाय
बृहत्सिंहाय
पातालस्थितसिंहाय
पर्वतवासिने
जलस्थसिंहाय
अन्तरिक्षस्थिताय
कालाग्निरुद्रसिंहाय
चण्डसिंहाय ७२०
अनन्तजिह्वसिंहाय
अनन्तगतये
विचित्रसिंहाय

ओं बहुसिंहस्वरूपिणे नमः
अभयङ्करसिंहाय
नरसिंहाय
सिंहराजाय
नारसिंहाय
सप्ताब्धिमेखलाय
सप्तसामरूपिणे ७३०
सप्तलोकान्तरस्थाय
सप्तस्वरमयाय
सप्तार्चीरूपदंष्ट्राय
सप्ताश्वरथरूपिणे
सप्तवायुस्वरूपाय
सप्तच्छन्दोमयाय
स्वच्छाय
स्वच्छरूपाय
स्वच्छन्दाय
श्रीवत्साय ७४०
सुवेषाय
श्रुतये
श्रुतिमूर्तये
शुचिश्रवाय
शूराय
सुप्रभाय
सुधन्विने
शुभ्राय
सुरनाथाय
सुलभाय ७५०

ओं शुभाय नमः

सुदर्शनाय
सूक्ष्माय (सूक्ताय)
निरुक्ताय
सुप्रभावस्वभावाय
भवाय
विभवाय
सुशाखाय
विशाखाय
सुमुखाय ७६०
सुखाय
सुनखाय
सुदंष्ट्राय
सुरथाय
सुधायै
सांख्याय
सुरमुख्याय
प्रख्याताय
प्रभायै
खड्वाङ्गहस्ताय ७७०
खेटमुद्गरपाणये
खगेन्द्राय
मृगेन्द्राय
नागेन्द्राय
दृढाय (ध्रुवाय)
नागकेयूरहाराय
नागेन्द्राय

ओं अघमर्दिने नमः

नदीवासाय
नग्नाय ७८०
नानारूपधराय
नागेश्वराय
नग्नाय
नमिताय
नराय
नागान्तकरथाय
नरनारायणाय
मत्स्यस्वरूपाय
कच्छपाय
यज्ञवराहाय ७९०
नरसिंहाय
विक्रमाक्रान्तलोकाय
वामनाय
महौजसे
भार्गवरामाय
रावणान्तकराय
बलरामाय
कंसप्रध्वंसकारिणे
बुद्धाय
बुद्धरूपाय ८००
तीक्ष्णरूपाय
कल्किने
आत्रेयाय
अग्निनेत्राय

ओं कपिलाय नमः
द्विजाय
क्षेत्राय
पशुपालाय
पशुवक्त्राय
गृहस्थाय ८१०
वनस्थाय
यतये
ब्रह्मचारिणे
स्वर्गापवर्गदात्रे
तद्भोक्त्रे
मुमुक्षवे
सालग्रामनिवासाय
क्षीराब्धिशयनाय
श्रीशैलाद्रिनिवासाय
शिलाशैलवासाय ८२०
योगिहृत्पद्मवासाय
महा (हंसाय) हासाय
गुहावासाय
गुह्याय
गुप्ताय
गुरवे
मूलाधिवासाय
नीलवस्त्रधराय
पीतवासाय
शस्त्राय ८३०
रक्तवस्त्रधराय

ओं रक्तमालाविभूषाय नमः
रक्तगन्धानुलेपिने
धुरन्धराय
धूर्ताय
दुर्धराय
धराय
दुर्मदाय
दुरन्ताय
दुर्धराय ८४०
दुर्निरीक्षाय
निष्ठायै (दीप्ताय)
दुर्दर्शाय
द्रुमाय
दुर्भेदाय
दुराशाय
दुर्लभाय
दृप्ताय
दीप्तवक्त्राय
अदृप्तनयनाय ८५०
उन्मत्ताय
प्रमत्ताय
दैत्यारये
रसज्ञाय
रसेशाय
आरक्तरसनाय
पथ्याय
परितोषाय

ओं रथ्याय नमः  ओं सर्वश्रेयस्कराय नमः

रसिकाय ८६०
ऊर्ध्वकेशाय
ऊर्ध्वरूपाय
ऊर्ध्वरेतसे
ऊर्ध्वसिंहाय
सिंहाय
ऊर्ध्वबाहवे
परध्वंसकाय
शङ्खचक्रधराय
गदापद्मधराय
पञ्चबाणधराय ८७०
कामेश्वराय
कामाय
कामपालाय
कामिने
कामविहाराय
कामरूपधराय
सोमसूर्याग्निनेत्राय
सोमपाय
सोमाय
वामाय ८८०
वामदेवाय
सामस्वनाय
सौम्याय
भक्तिगम्याय
कूष्माण्डगणनाथाय

भीष्माय
भीकराय
भीमविक्रमणाय
मृगग्रीवाय ८९०
जीवाय
जिताय
अजितकाशिने
जटिने
जामदग्न्याय
जातवेदसे
जपाकुसुमवर्णाय
जप्याय
जपिताय
जरायुजाय ९००
अण्डजाय
स्वेदजाय
उद्भिज्जाय
जनार्दनाय
रामाय
जाह्नवीजनकाय
जराजन्मादिदूराय
प्रद्युम्नाय
प्रमोदिने
जिह्वाय रौद्राय ९१०
रुद्राय
वीरभद्राय

ओं चिद्रूपाय नमः
समुद्राय
कद्रुद्राय
प्रचेतसे
इन्द्रियाय
इन्द्रियज्ञाय
इन्द्रानुजाय
अतीन्द्रियाय ९२०
सान्द्राय
इन्दिरापतये
ईशानाय
ईड्याय
ईशित्रे (ईप्सिताय)
इनाय
व्योमात्मने
व्योम्ने
व्योमकेशिने
व्योमाधाराय ९३०
व्योमवक्त्राय
असुरघातिने
व्योमदंष्ट्राय
व्योमवासाय
सुकुमाराय
रामाय (माराय)
शुभाचाराय
विश्वाय
विश्वरूपाय

ओं विश्वात्मकाय नमः ९४०
ज्ञानात्मकाय
ज्ञानाय
विश्वेशाय
परात्मने
एकात्मने
द्वादशात्मने
चतुर्विंशतिरूपाय
पञ्चविंशतिमूर्तये
षड्विंशकात्मने
नित्याय ९५०
सप्तविंशतिकात्मने
धर्मार्थकाममोक्षाय
विरक्ताय (विमुक्ताय)
भावशुद्धाय
सिद्धाय
साध्याय
शरभाय
प्रबोधाय
सुप्रबोधाय
बुद्धिप्रियाय (प्रदाय) ९६०
स्निग्धाय
विदग्धाय
मुग्धाय
मुनये
प्रियंवदाय (प्रियश्रवाय)
श्रव्याय

ओं स्रुक्स्रुवाय नमः
श्रिताय
गृहेशाय
महेशाय ९७०
ब्रह्मेशाय
श्रीधराय
सुतीर्थाय
हयग्रीवाय
उग्राय
उग्रवेगाय
उग्रकर्मरताय
उग्रनेत्राय
व्यग्राय
समग्रगुणशालिने ९८०
बालग्रहविनाशाय
पिशाचग्रहघातिने
दुष्टग्रहनिहन्त्रे
निग्रहानुग्रहाय
वृषध्वजाय
वृष्ण्याय
वृषाय
वृषभाय
उग्रश्रवाय
शान्ताय ९९०

ओं श्रुतिधराय नमः
देवदेवेशाय
मधुसूदनाय
पुण्डरीकाक्षाय
दुरितक्षयाय
करुणासिन्धवे
अमितिञ्जयाय
नरसिंहाय
गरुध्वजाय
यज्ञनेत्रास १०००
कालध्वजाय
जयध्वजाय
अग्निहोत्राय
अमरप्रियाय
महानेत्राय
भक्तवत्सलाय
धर्मनेत्राय
करुणाकराय
पुण्यनेत्राय
अभीष्टदायकाय १०१०
जयसिंहरूपाय
नरसिंहरूपाय
रणसिंहरूपाय नमः

ओं श्रीभूमिनीळासमेत श्रीलक्ष्मीनृसिंहपरब्रह्मणे नमः

श्रीलक्ष्मीनृसिंह अष्टोत्तर सहस्रनामावलिः संपूर्णा

योगो योगविदां नेता प्रधानपुरुषेश्वरः ।
नारसिंहवपुः श्रीमान्केशवः पुरुषोत्तमः ॥

अस्यैव निरुपाधिकमुक्त्युपायत्वमपि वक्ति-योगः युज्यते प्राप्यते अनेनेति । *अकर्तरि च कारके संज्ञायाम्, इति घञ् । एवं अमोघः सर्गः इत्यादीनि घञन्तानि । स सायुज्यस्यानन्यापेक्षः, साक्षाद्धेतुः इत्यर्थः । * एष ह्येवानन्दयाति * तद्धेतुव्यपदेशाच्च, अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि, इति ॥ १८

व्यवहितोपायनिष्ठानामपि योगविदां नेता । नयतेस्तृच् । भर्ता धाता इत्यादयोऽपि तृजन्ताः । फलपर्यन्तनिर्वाहकः । * तेषामेवानुकम्पार्थम्, *तेषामहं समुद्धर्ता *संसारपारं परमीप्समानैराराधनीयो हरिरेक एव, *परामृतात् परिमुच्यन्ति सर्वे, *जुष्टस्ततस्तेनामृतत्वं एति, इति ॥ १९

इदमेवोपपद्यते प्रधानपुरुषेश्वरः प्रधानस्यबन्धहेतोः, पुरुषाणां च बध्यमानानां सर्वथा नियामकः । स्थेशभास इत्यादिना वरच् । एवं स्थावरः । यथा *संयुक्तमेतत् क्षरमक्षरं च व्यक्ताव्यक्ते भरते विश्वमीशः । अनीशश्चात्मा बध्यते भोक्तृभावात् ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥ *प्रधानक्षेत्रज्ञपतिर्गुणेशः, *क्षरात्मानावीशते देव एकः, इति एवमीश्वरो हि स्वमायया जीवानपराध्यतो बध्नन् प्रपद्यमानांश्च मुञ्चन् क्रीडितुं प्रभवति । ईश्वरस्सर्वभूतानाम्, *दैवी ह्येषा गुणमयी *दैवी देवस्य क्रीडतः, क्रीडनकम् *संसारमोक्षस्थितिबन्धहेतुः, श्रीविष्णुतत्त्वे *तत्कृतायास्तु मायायास्तत्प्रसादं विना क्वचित् । नास्ति निर्णाशने हेतुः संक्षिप्येतत् प्रभाषितम् ॥ इति । *पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ *देहयोगाद्वा सोऽपि, इति च

सूत्रे। ताच्छील्यविषयेण वरचा तत्त्वत्रयभेद ईश्वरेशितव्यभावाश्चा-नौपाधिको ज्ञाप्यते ॥

स्वभक्त्यन्तरायनिवारणमपि प्रदर्शयति-नारसिंहवपुः, भक्त भयापहतदपेक्षासमक्षणप्रतिपन्नयथाकामदिव्यमहानृसिंहसंहननः ॥

अतः परस्परदुर्घटापूर्वविकृतरूपपरिग्रहादपि श्रीमान्, सौन्दर्य लावण्यादिभिरतिमनोहरदिव्यरूपः । तत्र नृसिंहत्वयोः सुघटितत्वं पश्यतां शुद्धिमदन्यन्नृमात्रं सिंहमात्रं वा दृष्ट्वा जुगुप्सा जायेतापि, तादृग्रूपपरिग्रहमात्रेणैव हि जगत् त्रातम्। "दंष्ट्राकरालं सुरभीतिनाशनं कृत्वा वपुर्दिव्यनृसिंहरूपिणा। त्रातं जगद् येन" इति ॥

एवंविधैश्वर्यसौन्दर्यैकान्तलक्षणान्युपलक्षयति - केशवः, प्रशस्त-स्निग्धनीलकुटिलकुन्तलः । *केशाद्वोऽन्यतरस्याम्, इति प्रशंसायां वः ।

सालक्षण्यप्रसक्त्या परमं वैलक्षण्यमाह - पुरुषोत्तमः; पुरुषेभ्यः उत्कृष्टतमः। पुरुषशब्देन चेतनवाचिनाऽचेतयमाना व्यक्ताव्यक्तरूपा प्रकृतिर्व्यावर्त्यते; उदित्युत्कृष्टवाचितया बद्धाः; सामर्थ्यप्राप्तेन तरपा मुक्ताः; तमपा नित्यमुक्ताः सूरयोऽनन्तवैनतेयादयः। इदं च तेभ्यो वैलक्षण्यं अवद्यप्रतिभटतया व्यापनभरणाद्युपकारैः स्वाम्येन च स्वभावत एवोत्कर्षात्। इदं हि बहुभिस्तात्पर्यलिङ्गैः परमं गुह्य-मगीयत, *द्वाविमौ पुरुषौ लोके, इत्यत्र । *भूमिरापोऽनिलो वायुः, *यो मामजमनादिं च, *अविकाराय शुद्धाय *परः पराणां परमः, इत्यादि बह्विदंपरं द्रष्टव्यम्। अत्रापि भोक्तृ भोग्य नियन्तृणामत्यन्तभेदः स्पष्टः । अतो ब्रह्मपरिणामपक्षश्च प्रतिक्षिप्तः । ब्रह्मणः सर्व विकारस्य ब्रह्मसंसारस्येश्वरातिरिक्तब्रह्मसद्भावस्य अव्यक्तमुक्तेश्वराणां ब्रह्मणि प्रलयोत्पादयोश्चाभ्युपगमो हि यथोक्तपुरुषोत्तमत्वेन सर्वेण वेदसिद्धान्तेन च विरुध्यते ॥

श्रीः

# श्रीविष्णुपुराणे प्रथमांशे १९ तमोऽध्यायः

प्रह्लादः-

नमस्ते पुण्डरीकाक्ष नमस्ते पुरुषोत्तम ।
नमस्ते सर्वलोकात्मन् नमस्ते तिग्मचक्रिणे ॥ ६४
(नमस्ते वासुदेवाय नमस्ते करुणाकर ।
नमस्ते विश्वरूपाय नमस्ते सर्वमूर्तये ॥)
नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च ।
जगद्धिताय कृष्णाय गोविन्दाय नमो नमः ॥ ६५
ब्रह्मत्वे सृजते विश्वं स्थितौ पालयते पुनः ।
रुद्ररूपाय कल्पान्ते नमस्तुभ्यं त्रिमूर्तये ॥ ६६
देवा यक्षाः सुराः सिद्धा नागा गन्धर्वकिन्नराः ।
पिशासा राक्षसाश्चैव मनुष्याः पशवस्तथा ॥ ६७
पक्षिणस्स्थावराश्चैव पिपीलिकसरीसृपाः ।
भूम्यापोऽग्निर्नभो वायुः शब्दस्स्पर्शस्तथा रसः ॥ ६८
रूपं गन्धो मनो बुद्धिरात्मा कालस्तथा गुणाः ।
एतेषां परमार्थश्च सर्वमेतत् त्वमच्युत ॥ ६९
विद्याविद्ये भवान् सत्यमसत्यं त्वं विषामृते ।
प्रवृत्तं च निवृत्तं च कर्मवेदोदितं भवान् ॥ ७०
समस्तकर्मभोक्ता च कर्मोपकरणानि च ।
त्वमेव विष्णो सर्वाणि सर्वकर्मफलं च यत् ॥ ७१
मय्यन्यत्र तथाऽशेषभूतेषु भुवनेषु च ।
तवैव व्याप्तिरैश्वर्यगुणसंसूचकी प्रभो ॥ ७२
त्वां योगिनश्चिन्तयन्ति त्वां यजन्ति च याजकाः ।
हव्यकव्यभुगेकस्त्वं पितृदेवस्वरूपधृत् ॥ ७३
रूपं महत् ते स्थितमत्र विश्वं ततश्च सूक्ष्मं जगदेतदीश ।
रूपाणि सूक्ष्माणि च भूतभेदास्तेष्वन्तरात्माख्यमतीव सूक्ष्मम् ॥ ७४

तस्माच्च सूक्ष्मादिविशेषणानामगोचरे यत्परमात्मरूपम् ।
किमप्यचिन्त्यं तव रूपमस्ति तस्मै नमस्ते पुरुषोत्तमाय ।। ७५

सर्वभूतेषु सर्वात्मन् या शक्तिरपरा तव ।
गुणाश्रया नमस्तस्यै शाश्वतायै सुरेश्वर ।। ७६

याऽतीतगोचरा वाचां मनसां चाविशेषणा ।
ज्ञानिज्ञानपरिच्छेद्या तां वन्दे चैश्वरीं पराम् ।। ७७

ओं नमो वासुदेवाय तस्मै भगवते सदा ।
व्यतिरिक्तं न यस्यास्ति व्यतिरिक्तोऽखिलस्य यः ।। ७८

नमस्तस्मै नमस्तस्मै नमस्तस्मै महात्मने ।
नाम रूपं च यस्यास्ति योऽस्तित्वेनोपलभ्यते ।। ७९

यस्यावताररूपाणि समर्चन्ति दिवौकसः ।
अपश्यन्तः परं रूपं नमस्तस्मै महात्मने ।। ८०

योऽन्तस्तिष्ठन्नशेषस्य पश्यतीशः शुभाशुभम् ।
तं सर्वसाक्षिणं विष्णुं नमस्ते परमेश्वरम् ।। ८१

नमोऽस्तु विष्णवे तस्मै यस्याभिन्नमिदं जगत् ।
ध्येयस्स जगतामाद्यः स प्रसीदतु मेऽव्ययः ।। ८२

यत्रोतमेतत्प्रोतं च विश्वमक्षरसंज्ञके ।
आधारभूतस्सर्वस्य स प्रसीदतु मे हरिः ।। ८३

ओं नमो विष्णवे तस्मै नमस्तस्मै पुनः पुनः ।
यत्र सर्वं यतः सर्वं यः सर्वं सर्वसंश्रयः ।। ८४

सर्वगत्वादनन्तस्य स एवाहमवस्थितः ।
मत्तस्सर्वमहं सर्वं मयि सर्वं सनातने ।। ८५

अहमेवाक्षयो नित्यः परमात्माऽऽत्मसंश्रयः ।
ब्रह्मसंज्ञोऽहमेवाग्रे तथाऽन्ते च परः पमान् ।। ८६

इति विष्णुपुराणे प्रथमेंशे एकोनविंशतितमोऽध्यायः

## श्रीमद्भागवते सप्तमस्कन्दे नवमोऽध्यायः

### कुपितं श्रीनृसिंहं शमयितुं ब्रह्मणा प्रेषितेन प्रह्लादेन श्रीनृसिंहस्तुतिः

प्रह्लादः-

ब्रह्मादयः सुरगणाः मुनयोऽथ सिद्धाः
सत्त्वैकतानमतयो वचसां प्रवाहैः ।
१नाराधितुं पुरुगुणैरधुनाऽपि २पिप्रुः
किं तोष्टुमर्हति स मे हरिरुग्रजातेः ॥ ८

मन्ये धनाभिजनरूपतमःश्रुतौज -
स्तेजःप्रभावबलपौरुषबुद्धियोगाः ।
नाराधनाय हि भवन्ति परस्य पुंसः
भक्त्या तुतोष भगवान् ३गजयूथपाय ॥ ९

विप्राद् द्विषड्गुणयुतादरविन्दनाभ-
पादारविन्दविमुखाच्छ्वपचं वरिष्ठम् ।
मन्ये तदर्पितमनो ४वचने हितार्थ-
प्राणं पुनाति स ५ कुलं न तु भूरिमानः ॥ १०

नैवात्मनः प्रभुरयं निजलाभपूर्णो
मानं जनादविदुषः करुणो वृणीते ।
यद्यज्जनो भगवते विदधीत मानं
तच्चाऽऽत्मने प्रतिमुखस्य यथा मुखश्रीः ॥ ११

तस्मादहं विगतविक्लब ईश्वरस्य
सर्वात्मना ६महि गृणामि यथामनीषम् ।
नीचोऽजया गुणविसर्गमनुप्रविष्टः
पूयेत येन हि पुमाननुवर्णितेन ॥ १२

सर्वे ह्यमी विधिकरास्तव सत्त्वधाम्नो
ब्रह्मादयो वयमिवेश न चोद्विजन्तः ।

---

१ विज. नान्तं परस्य परतोप्यधुनापि यान्ति । २ वीर.पूर्णाः । ३ विज. ननु । ४ विज. वचनात्मगेहप्राणः । वीर. वचनेहितार्थप्राणः । ५ विज. सकलं । ६ विज. नहि

क्षेमाय भूतय उताऽऽत्मसुखाय १चास्य
विक्रीडितं भगवतो रुचिरावतारैः ॥ १३

तद्यच्छ मन्युरसुरश्च हतस्त्वयाऽद्य
मोदेत साधुरपि वृश्चिकसर्पहत्या ।
लोकाश्च निर्वृतिमिताः २प्रतियन्ति सर्वे
रूपं नृसिंह ३विभयाय जनाः स्मरन्ति ॥ १४

नाहं बिभेम्यजित तेऽतिभयानकास्य-
४जिह्वार्कनेत्रभ्रुकुटीरभसोग्रदंष्ट्रात् ।
आन्त्रस्रजःक्षतजकेसरशङ्कुकर्ण-
न्निर्ह्रादभीतदिगिभादरिभिन्नखाग्रात् ॥ १५

त्रस्तोऽस्म्यहं कृपणवत्सल दुःसहोग्र-
संसारचक्रकदनाद् ५ग्रसतां प्रणीतः ।
बद्धः स्वकर्मभिरुशत्तम तेऽङ्घ्रिमूलं
प्रीतोऽ६पवर्गमरणं ह्वयसे कदा नु ॥ १६

यस्मात् प्रियाप्रिय वियोगसयोगजन्म-
शोकाग्निना सकलयोनिषु दह्यमानः ।
दुःखौषधं तदपि दुःखमतद्धियाऽहं
भूमन् भ्रमामि ७वद मे तव दास्ययोगम् ॥ १७

सोऽहं प्रियस्य सुहृदः परदेवताया
लीलाकथास्तव नृसिंह विरिञ्चगीताः ।
अञ्ज८स्तितर्म्यनुगृणन् गुणविप्र९मुक्तो
दुर्गाणि ते पदयुगालयहंससङ्गः ॥ १८

बालस्य १० नेह शरणं पितरौ नृसिंह
११नार्तस्य चागदमुदन्वति मज्जतो नौः ।

---

१विज.वास्य । २ उभ. प्रतियान्तु । ३ उभ. विभवाय । ४ विज. जिह्वाग्निनेत्र । ५ विज. कृशतां । ६ विज. भीतापवर्गमरणं समियां ।वीर. श्रीतोपवर्गशरणं ह्वयते । ७ वीर. दिश मे ८ विज. अञ्जस्तराम्यनुगृण । ९ वीर. विप्रमुक्तो । १० विज. नेह । ११ विज. आर्तस्य ।

तप्तस्य १तत्प्रतिविधिर्य इहाञ्जसेष्ट-
स्तावद्विभो तनुभृतां २त्वदुपेक्षितानाम् ॥ १९

यस्मिन् यतो यर्हि येन च यस्य ३यस्माद्
यस्मै यथा यदुत यस्त्वपरः परो वा ।
४भावः करोति विकरोति पृथक्स्वभावः
संचोदितस्तदखिलं भवतः स्वरूपम् ॥ २०

माया मनः सृजति कर्ममयं बलीयः
कालेन चोदितगुणाऽनुमतेन पुंसः ।
छन्दोमयं सदजयाऽर्पितषोडशारं
संसारचक्रमज कोऽतितरेत् त्वदन्यः ॥ २१

स त्वं हि नित्यविजितात्मगुणः स्वधाम्ना
कालो वशीकृतविसृज्यविसर्गशक्तिः ।
चक्रे विसृष्टमजयेश्वर षोडशारे
निष्पीड्यमान ५मुपकर्ष विभो प्रपन्नम् ॥ २२

दृष्टा मया दिवि विभोऽखिलधिष्ण्यपाना-
मायुः श्रियो विभव इच्छति यां जनोऽयम् ।
येऽस्मत्पितुः कुपितहासविजृम्भितभ्रू-
विस्फूर्जितेन लुलिताः स तु ते निरस्तः ॥ २३

तस्मादमूस्तनुभृतामहमाशिषो ज्ञ
आयुः श्रियं विभवमैन्द्रियमाविरिञ्चात् ।
नेच्छामि ते विलुलितानुरुविक्रमेण
कालात्मनोपनय मां निजभृत्यपार्श्वम् ॥ २४

कुत्राऽऽशिषः श्रुतिसुखा ६ मृगतृष्णिरूपाः
क्वेदं कलेबरमशेषरुजां विरोहः ।
निर्विद्यते न तु जनो ७यदपीति विद्वान्
कामानलं मधुलवैः शमयन् दुरापैः ॥ २५

---

१ विज. तर्पणविधिर्यदिहाञ्जसेष्टस्तद्वत्प्रभो । २ विज. त्वदुपासकानां । ३ विज. यस्मात् नास्ति । ४ विज. भाव्यं । ५ वीर. मपकर्ष । ६ उभ. मृगतृष्णरूपाः । विज. यदपीह ।

क्वाहं रजःप्रभव ईश तमोऽधिकेऽस्मिन्
जातः सुरेतरकुले क्व तवानुकंपा ।
न ब्रह्मणो न तु भवस्य न वै रमाया
यन्मेऽर्पितः शिरसि १पद्मकरः प्रसादः ॥ २६

नैषा परावरमतिर्भवतो ननु स्यात्
जन्तोर्यथात्मसुहृदो जगतस्तथापि ।
संसेवया सुरतरोरिव ते प्रसादः
सेवानुरूपमुदयो न परावरत्वम् ॥ २७

एवं जनं निपतितं प्रभवाहिकूपे
कामाभिकाममनु यः प्रपतन् प्रसङ्गात् ।
कृत्वाऽऽत्मसात् सुरर्षिणा भगवन् गृहीतः
सोऽहं कथं नु विसृजे तव भृत्यसेवाम् ॥ २८

मत्प्राणरक्षणमनन्त पितु २ र्वधश्च
मन्ये स्वभृत्य ऋषिवाक्यमृतं विधातुम् ।
खड्गं प्रगृह्य यदवोचदसद्विधित्सुः
त्वामीश्वरो मदपरोऽवतु कं हरामि ॥ २९

एकस्त्वमेव जगदेतदमुष्य यत्त्वं
आद्यन्तयोः पृथगवस्यसि मध्यतश्च ।
सृष्ट्वा गुणव्यतिकरं निजमाययेदं
नानेव तैरवसितस्तदनु प्रविष्टः ॥ ३०

त्वं वा इदं सदसदीश भवांस्ततोऽन्यो
माया यदात्मपरबुद्धिरियं ह्यपार्था ।
यद्यस्य जन्म निधनं स्थितिरीक्षणं च
तद्वै तदेव ३ वसुकालव ४दष्टितर्वोः ॥ ३१

न्यस्येदमात्मनि जगद्विलयांबुमध्ये
शेषेऽऽ ५ त्मना निजमुखानुभवो निरीहः ।

---

१ विज. पद्मकरप्रसादः । २ विज. पितुर्वधं च । ३ विज. खलु । ४ उभ.दुष्टितर्वोः ।
५ वीर. शेषे स्वतो । विज. शेषासनो ।

योगेन मीलितदृगात्मनि १ पीतनिद्रः
तुर्ये स्थितो न तु २ तमो न गुणांश्च ३ युङ्क्षे ॥ ३२
तस्यैव ते वपुरिदं निजकालशक्त्या
४ संचोदितप्रकृतिधर्मण आत्मगूढम् ।
अम्भस्यनन्तशयनाद्विरमत्समाधे -
नाभेरभूत् स्वकणिकावटवन्महाब्जम् ॥ ३३
तत्संभवः कविरतोऽन्यदपश्यमान -
स्त्वां बीजमात्मनि ततं ५ स्वबहिर्विचिन्त्य ।
नाविन्ददब्दशतमप्सु निमज्जमानो
जातेऽङ्कुरे कथमु ६ होलभेत बीजम् ॥ ३४
स त्वात्मयोनिरतिविस्मित आस्थितोऽब्जं
कालेन तीव्रतपसा परिशुद्धभावः ।
त्वामात्मनीश भुवि गन्धमिवातिसूक्ष्मं
भूतेन्द्रिया ७ शयमये विततं ददर्श ॥ ३५
एवं सहस्रवदनाङ्घ्रिशिरःकरोरु -
नासास्यकर्णनयनाभरणायुधाढ्यम् ।
मायामयं सदु ८ पलक्षितसन्निवेशं
दृष्ट्वा महापुरुषमाप मुदं विरिञ्चः ॥ ३६
तस्मै भवान् ९ हयशिरस्तनुवं च बिभ्रद्
वेदद्रुहावतिबलौ मधुकैटभाख्यौ ।
हत्वाऽनयत् श्रुतिगणांस्तु रजस्तमश्च
सत्त्वं तव प्रियतमां तनुमामनन्ति ॥ ३७
इत्थं नृतिर्यगृषिदेवझषावतारैः
लोकान् विभावयसि हंसि जगत्प्रतीपान् ।
धर्मं महापुरुष पासि युगानुवृत्तं
च्छन्नः कलौ यदभवस्त्रियुगोऽथ सत्त्वम् ॥ ३८

---

१ उभ. वीतनिद्र । २ वीर. तमेव । ३ विज. युङ्क्ते । ४ विज. संचोपितं । विज. स वहिर्विचिन्वन् । ६ वीर. महोपलभेत । विज. मिहोपलभेत । ७ वीर. शयमयं । ८ उभ. सदुपलक्षण । ९ वीर. हयशिरस्तनुतां ।

नैतन्मनस्तव कथासु विकुण्ठनाथ
संप्रीयते दुरितदुष्टमसाधु तीव्रम् ।
कामातुरं हर्षशोकभयैषणार्तं
तस्मिन् कथं तव गतिं विमृशामि दीनः ॥ ३९

जिह्वैकतोऽच्युत विकर्षति माऽवितृप्ता
शिश्नोऽन्यतस्त्वगुदरं श्रवणं कुतश्चित् ।
घ्राणोऽन्यतश्चपलदृक् क्व च कर्मशक्तिः
बह्व्यः सपत्न्य इव गेहपतिं लुनन्ति ॥ ४०

एवं स्वकर्मपतितं भववैतरण्यां
अन्योन्यजन्ममरणाशन भीतभीतम् ।
पश्यञ्जनं स्वपरविग्रहवैरमैत्रं
हन्तेति १ पारचर पीपृहि मूढमद्य ॥ ४१

को न्वत्र तेऽखिलगुरो भगवन् प्रयास
उत्तारणेऽस्य भवसंभवलोपहेतोः ।
मूढेषु वै महदनुग्रह आर्तबन्धो
किं तेन ते प्रियजनाननु २ सेवतां नः ॥ ४२

नैवोद्विजे ३ पर दुरत्ययवैतरण्याः
४ त्वद्वीर्यगायनमहामृत ५ मग्नचित्तः ।
शोचे ६ ततो विमुखचेतस इन्द्रियार्थ-
मायासुखाय भरमुद्वहतो विमूढान् ॥ ४३

प्रायेण देव मुनयः स्वविमुक्तिकामा
मौनं चरन्ति विजने न परमार्थनिष्ठाः ।
नैतान् विहाय कृपणान् विमुमुक्ष एको
नान्यं त्वदस्य शरणं भ्रमतोऽनुपश्ये ॥ ४४

---

१ विज. पारमतिपीपृहि मूढसत्त्वं । २ विज. सेवमानः । ३ विज. भव । ४ विज. त्वत्तीर्थ । ५ विज. यतचित्तः । ६ विज. शोचे नु तं ।

यन्मैथुनादि गृहमेधिसुखं हि तुच्छं
कण्डूयनेन करयोरिव दुःखदुःखम् ।
तृप्यन्ति १ नेह कृपणा बहुदुःखभाजः
कण्डूतिवन्मनसिजं विषहेत धीरः ॥ ४५

मौनव्रतश्रुततपोऽध्ययनस्वधर्म-
व्याख्यारहोजपसमाधय आपवर्ग्याः ।
प्रायः परं पुरुष ते त्वजितेन्द्रियाणां
वार्ता भवन्त्युत न वाऽत्र तु दंभिकानाम् ॥ ४६

रूपे इमे सदसती तव २ वेदसृष्टे
बीजाङ्कुराविव न चान्यदरूपकस्य ।
युक्ताः समक्षमुभयत्र ३ विचिन्वते त्वां
योगेन वह्निमिव दारुषु नान्यतः स्यात् ॥ ४७

त्वं वायुरग्निरवनिर्वियदंबुमात्राः
प्राणेन्द्रियाणि हृदयं चिदनुग्रहश्च ।
सर्वं त्वमेव सगुणो विगुणश्च भूमन्
नान्यत् त्वदस्त्यपि मनोवचसा निरुक्तम् ॥ ४८

नैते गुणा न गुणिनो महदादयो ये
सर्वे मनःप्रभृतयः सहदेवमर्त्याः ।
आद्यन्तवन्त उरुगाय विदन्ति हि त्वां
एवं विमृश्य सुधियो विरमन्ति शब्दात् ॥ ४९

४ तत्तेऽर्हत्तम नमःस्तुतिकर्मपूजाः
कर्म स्मृकतश्चरणयोः श्रवणं कथायाम् ।
संसेवया त्वयि विनेति षडङ्गया किं
भक्तिं जनः परमहंसगतौ लभेत ॥ ५०

---

१ विज. देहकृपणाः । २ उभे. वेदश्रे ।३ वीर. विचक्षते । ४ वीर. तत्ते महत्तम नमः ॥ विज. तत्त्वे मनो दर्शने दृगपि स्तुतौ च वाक्कर्मणि ह्यपि करौ श्रवणं ।

# सप्तचत्वारिंशोऽध्यायः

**ब्रह्मोवाच**

भवानक्षरमव्यक्तमचिन्त्यं गुह्यमुत्तमम् ।
कूटस्थमकृतं कर्तृ सनातनमनामयम् ॥
सांख्ययोगे च या बुद्धिस्तत्त्वार्थपरिनिष्ठिता ।
तां भवान् वेदविद्यात्मा पुरुषः शाश्वतो ध्रुवः ॥
त्वं व्यक्तश्च तथाऽव्यक्तस्त्वत्तः सर्वमिदं जगत् ।
भवन्मया वयं देव भवानात्मा भवान् प्रभुः ॥
चतुर्विभक्तमूर्तिस्त्वं सर्वलोकविभुर्गुरुः ।
चतुर्युगसहस्रेण सर्वलोकान्तकान्तकः ॥
प्रतिष्ठा सर्वभूतानामनन्तबलपौरुषः ।
कपिलप्रभृतीनां च यतीनां परमा गतिः ॥
अनादिमध्यनिधनः सर्वात्मा पुरुषोत्तमः ।
स्रष्टा त्वं, त्वं च संहर्ता त्वमेको लोकभावनः ॥
भवान् ब्रह्मा च रुद्रश्च महेन्द्रो वरुणो यमः ।
भवान् कर्ता विकर्ता च लोकानां प्रभुरव्ययः ॥
परां च सिद्धिं परमं च देवं
परं च मन्त्रं परमं मनश्च ।
परं च धर्मं परमं यशश्च
त्वामाहुरग्र्यं पुरुषं पुराणम् ॥
परं च सत्यं परमं हविश्च
परं पवित्रं परमं च मार्गम् ।
परं च होत्रं परमं च यज्ञं
त्वामाहुरग्र्यं पुरुषं पुराणम् ॥
परं शरीरं परमं च धाम
परं च योगं परमां च वाणीम् ।

परं रहस्यं परमां गतिं च
त्वामाहुरग्र्यं पुरुषं पुराणम् ॥
परं परस्यापि परं च यत् परं
परं परस्यापि परं च देवम् ।
परं परस्यापि परं प्रभुं च
त्वामाहुरग्र्यं पुरुषं पुराणम् ॥
परं परस्यापि परं प्रधानं
परं परस्यापि परं च तत्त्वम् ।
परं परस्यापि परं च धाता
त्वामाहुरग्र्यं पुरुषं पुराणम् ॥
परं परस्यापि परं रहस्यं
परं परस्यापि परं परं यत् ।
परं परस्यापि परं तपो यत्
त्वामाहुरग्र्यं पुरुषं पुराणम् ॥
परं परस्यापि परं परायणं
परं च गुह्यं च परं च धाम ।
परं च योगं परमं प्रभुत्वं
त्वामाहुरग्र्यं पुरुषं पुराणम् ॥

श्रीवत्साङ्कमिश्राः

अतिमानुषस्तवः

क्रीडाविधेः परिकरस्तव या तु माया
सा मोहिनी न कतमस्य तु हन्त! जन्तोः ।
है मर्त्यसिंहवपुषस्तव तेजसोऽंशे
शम्भुर्भवन् हि शरभः शलभो बभूव ॥ १२

க்ரீடாவிதே: பரிகரஸ்தவ யா து மாயா
ஸா மோஹிநீ ந கதமஸ்ய து ஹந்த ஜந்தோ: ।
ஹை மர்த்யஸிம்ஹவபுஷஸ்தவ தேஜஸோऽம்ஶே
ஶம்புர் பவந் ஹி ஶரப: ஶலபோ பபூவ ॥ 12

न वायुः पस्पन्दे ययतुरथवाऽस्तं शशिरवी
दिशोऽनश्यन् विश्वाऽप्यचलदचला साचलकुला ।
नभश्च प्रश्चोति क्वथितमपि पाथो नरहरौ
त्वयि स्तम्भे शुम्भद्वपुषि सति हे सुन्दरभुज ।। ९५

ந வாயு: பஸ்பந்தே யயதுரதவாऽஸ்தம் மமிரவீ
திமோऽநம்யந் விம்வாऽப்யசதசலா ஸாசலகுலா।
நபம்ச ப்ரம்சோதி க்வதிதமபி பாதோ நரஹரௌ
த்வயி ஸ்தம்பே மும்பத்வபுஷி ஸதி ஹே ஸுந்தரபுஜ ।। 95

अरालं पातालं त्रिदशनिलयः प्रापितलयो
धरित्री निर्धूता ययुरपि दिशः कामपि दिशम् ।
अजृम्भिष्टाम्भोधिर्घुमुघुमिति घूर्णन् सुररिपोः
विभिन्दाने वक्षस्त्वयि नरहरौ सुन्दरभुज ।। ९६

அராளம் பாதாளம் த்ரிதமநிலய: ப்ராபிதலயோ
தரித்ரீ நிர்த்தூதா யயுரபி திம: காமபி திமம் ।
அஜ்ரும்பிஷ்டாம்போதிர்குமுகுமுகுமிதி கூர்ணந் ஸுரரிபோ:
விபிந்தாநே வக்ஷஸ்த்வயி நரஹரௌ ஸுந்தரபுஜ ।। 96

नखक्रकचकप्रधिक्रथित दैत्यवक्षःस्थली -
समुत्थरुधिरच्छटाच्छुरितबिम्बितं स्वं वपुः ।
विलोक्य रुषितः पुनः प्रतिमृगेन्द्रशङ्कावशात्
स एष नरकेसरी स इह दृश्यते सुन्दरः ।। ९७

நகக்ரகசகப்ரதிக்ரதித தைத்ய வக்ஷஸ்தலீ-
ஸமுத்தருதிரச்சடாச்சுரித பிம்பிதம் ஸ்வம் வபு: ।
விலோக்ய ருஷித: புந: ப்ரதிம்ருகேந்த்ர மங்காவமாத்
ஸ ஏஷ நரகேஸரீ ஸ இஹ த்ரும்யதே ஸுந்தர: ।। 97

यदपराधसहस्रमजस्रं त्वयि शरण्य हिरण्य उपावहत् ।
वरद तेन चिरं त्वमविक्रियो विकृतिमर्भकनिर्भजनादगाः ।। ९८

யதபராதஸஹஸ்ரமஜஸ்ரம்
த்வயி ஶரண்ய ஹிரண்ய உபாவஹத் ।
வரத தேந சிரம் த்வமவிக்ரியோ
விக்ருதிமர்ப்பகநிர்பஜநாதகா: ॥ 68

नरसिंहतनुरगौणी समसमय समुद्भवश्च भक्तगिरः ।
स्तम्भे च सम्भवस्ते पिशुनयति परेशतां वरद ॥ ७१

நரஸிம்ஹ தநுரகௌணீ ஸமஸமய ஸமுத்பவஶ்ச பக்தகிர: ।
ஸ்தம்பே ச ஸம்பவஸ்தே பிஶுநயதி பரேஶதாம் வரத ॥

## श्रीपराशरभट्टारकाः

श्रीरङ्गराजस्तवः

व्यापि रूपमपि गोष्पदयित्वा
भक्तवत्सलतयोज्झितवेलम् ।
तद्द्विषन्तपनृकेसरिरूपं
गोपुरोपरि विजृम्भितमीडे ॥ १-४६

வ்யாபி ரூபமபி கோஷ்பதயித்வா
பக்தவத்ஸலதயோஜ்ஜித வேலம் ।
தத்த்விஷந்தப ந்ருகேஸரிரூபம்
கோபுரோபரி விஜ்ரும்பிதமீடே ॥ 1-46

अहमलमवलम्बः सीदतां इत्यजस्रं
निवसदुपरिभागे गोपुरं रङ्गधाम्नः ।
क्वचन नृपरिपाटीवासितं क्वापि सिंह-
क्रमसुरभितमेकं ज्योतिरग्रे चकास्ति ॥ १-४७

அஹமலமவலம்ப: ஸீததாம் இத்யஜஸ்ரம்
நிவஸதுபரிபாகே கோபுரம் ரங்கதாம்ந: ।
க்வசந ந்ருபரிபாடீ வாஸிதம் க்வாபி ஸிம்ஹ-
க்ரமஸுரபிதமேகம் ஜ்யோதிரக்ரே சகாஸ்தி ॥ 1-47

नृहरिदशयोः पश्यन् औत्पत्तिकं घटनाद्भुतं
नरमृत हरिं दृष्ट्वैकैकं समुद्विजतो जनः ।

इति किल सिताक्षीरन्यायेन सङ्गमिताङ्कं
स्फुटसटमहादंष्ट्रं रङ्गेन्द्रसिंहमुपास्महे ॥ २-६४

ந்ஹரிதமயோ: பய்யந் ஔளத்பத்திகம் கடநாத்புதம்
நரமுத ஹரிம் த்ருஷ்ட்வைகைகம் ஸமுத்விஜதே ஜந: ।
இதி கில ஸிதாக்ஷீர ந்யாயேந ஸங்கமிதாங்ககம்
ஸ்புடஸடமஹாதம்ஷ்ட்ரம் ரங்கேந்த்ரஸிம்ஹமுபாஸ்மஹே ॥

द्विषाणद्वेषोद्यन्नयनवनवह्निप्रशमन-
भ्रमल्लक्ष्मीवक्त्रप्रहितमधुगण्डूषसुषमैः ।
नखक्षुण्णारातिक्षतजपटलैराप्लुतसटा-
च्छटास्कन्धो रुन्धे दुरितमिह पुंस्पञ्चवदनः ॥ २-६५

த்விஷாண த்வேஷோத்யந்நயந வந வஹ்நி ப்ரமமந-
ப்ரமல்லக்ஷ்மீவக்த்ர ப்ரஹிதமது கண்டூஷஸுஷமை: ।
நகக்ஷுண்ணாராதிக்ஷதஜ படலைராப்லுதஸடா-
ச்சடாஸ்கந்தோ ருந்தே துரிதமிஹ பும்ஸ்பஞ்சவதந: ॥

नखाग्रग्रस्तेऽपि द्विषति निजभक्तद्रुहि रुषः
प्रकर्षाद् विष्णुत्वद्विगुणपरिणाहोत्कटतनुः ।
विरुद्धे वैयग्रीसुघटितसमानाधिकरणे
नृसिंहत्वे बिभ्रद् वरद बिभरामासिथ जगत् ॥ २-६६

நகாக்ரக்ரஸ்தேऽபி த்விஷதி நிஜபக்தத்ருஹி ருஷ:
ப்ரகர்ஷாத் விஷ்ணுத்வ த்விகுண பரிணாஹோத்கடதநு: ।
விருத்தே வையக்ரீ ஸுகடித ஸமாநாதிகரணே
ந்ருஸிம்ஹத்வே பிப்ரத் வரத பிபராமாஸித ஜகத் । 2-66

श्रीमन्निगमान्तमहादेशिकाः

स कैटभतमोरविर्मधुपरागझञ्झामरुत्
हिरण्यगिरिदारणस्त्रुटितकालनेमिद्रुमः ।
किमत्र बहुना? भजद्भवपयोधिमुष्टिन्धयः
त्रिविक्रम ! भवत्क्रमः क्षिपतु मङ्क्षु रङ्गद्विषः ॥

सं-सू- २- ८२ अभीतिस्तवः

ஸகைடபதமோரவிர்மதுபராக ஜஞ்ஜாமருத்
ஹிரண்யகிரிதாரணஸ்த்ருடித காலநேமித்ரும: ।

கிமத்ர பஹுநா பஜத்பவபயோதி முஷ்டிந்தய:
த்ரவிக்ரம! பவத்க்ரம: க்ஷிபது மங்க்ஷு ரங்கத்விஷ: ॥

किमत्र हरिरित्यथ प्रकटितोपहासक्रमं
हिरण्यकरघट्टनात् सपदि जृम्भितः स्तम्भतः ।
पुरःस्फुरति सम्भ्रमस्फुटसटाच्छटाच्छोटन-
त्रुटद्घनघनारवद्विगुणबृंहितः सिंहराट् ॥

கிமத்ர ஹரிரித்யத ப்ரகடிதோபஹாஸக்ரமம்
ஹிரண்யகரகட்டநாத் ஸபதி ஜ்ரும்பித: ஸ்தம்பத: ।
புர: ஸ்புரதி ஸம்ப்ரமஸ்புடஸடாச்ச்சடாச்சோடந-
த்ருடத்கநகநாரவத்விகுண ப்ரும்ஹித: ஸிம்ஹாட் ॥

सं-सू- ७- ३६

विदारयति दारुणैर्वलभिदस्त्रभङ्गोद्भटां
सटाविधुतिसम्भ्रमभ्रमितसप्तलोकस्थितिः ।
कुलाचलशिलातलद्रढिमडम्बरस्तम्भिनीं
प्रभुर्द्विषदुरस्थलीं नखरशृङ्गदम्भोलिभिः ॥

விதாரயதி தாருணைர் வலபிதஸ்த்ர பங்கோத்படாம்
ஸடாவிதுதி ஸம்ப்ரம ப்ரமித ஸப்தலோகஸ்திதி: ।
குலாசலஶிலாதலத்ரடிமடம்பரஸ்தம்பிநீம்
ப்ரபு: த்விஷதுரஸ்ஸ்தலீம் நகரஶ்ருங்கதம்போளிபி: ॥

सं-सू- ७- ३७

दम्भोलिश्रेणिदीव्यत्खरनखरमुखक्षुण्णदैतेयवक्षो -
निष्ठ्यूतासृक्स्रवन्तीभरितदशदिशादर्शितापूर्वसन्ध्यः ।
स्वामिध्वंसप्रकुप्यत्सुररिपुपृतनास्तोमरूपं स एष
ब्रह्मस्तम्बैकचन्द्रो बहुभिरिह करैरन्धकारं निरुन्धे ॥

தம்போளிஶ்ரேணி தீவ்யத்கரநகரமுக
க்ஷுண்ண தைதேயவக்ஷோ-
நிஷ்ட்யூதாஸ்ருக்ஸ்ரவந்தீ
பரிததஶதிஶாதர்ஶிதாபூர்வஸந்த்ய: ।
ஸ்வாமித்வம்ஸ ப்ரகுப்யத் ஸுராரிபு ப்ருதநா
ஸ்தோமரூபம் ஸ ஏஷ
ப்ரஹ்மஸ்தம்பைக சந்த்ரோ பஹுபிரிஹ
கரைரந்தகாரம் நிருந்தே ॥

सं-सू- ७- ३८

विकस्वरनखस्वरुक्षतहिरण्यवक्षस्थली -
निरर्गलविनिर्गलद्रुधिरसिन्धुसन्ध्यायिताः ।
हरन्तु मदघं रमासहचरस्य लीलाहरेः
अहम्प्रथमिकामिथःप्रकटिताहवा बाहवः ।।

விகஸ்வரநகஸ்வருக்ஷதஹிரண்யவக்ஷ:ஸ்தலீ-
நிரர்களவிநிர்களத்ருதிர ஸிந்து ஸந்த்யாயிதா: ।
ஹரந்து மதகம் ரமாஸஹசரஸ்ய லீலாஹரே-
ரஹம் ப்ரதமிகாமித: ப்ரகடிதாஹவா பாஹவ: ॥

सं -सू- ७- ३९ कामासिकाष्टकम्

प्रह्लादाह्लादनानि प्रणतसुरजनप्राणनप्रीणनानि
प्रत्यूढस्थेमभीमप्रलयघनघटाघोषणाडम्बराणि ।
क्षुभ्यत्सप्ताम्बुधीनि क्षुरपरुषनखक्रीडितक्षुण्णशत्रोः
अस्मद्भीतिव्यपोहं विदधतु नृहरेरट्टहासाद्भुतानि ।।

ப்ரஹ்லாதஹ்லாதநாநி ப்ரணதஸுரஜநப்ராணநப்ரீணநாநி
ப்ரத்யூடஸ்தேமபீமப்ரளயகநகடாகோஷணாடம்பராணி ।
க்ஷுப்யத்ஸப்தாம்புதீநி க்ஷுரபருஷநகக்ரீடிதக்ஷுண்ணஶத்ரோ:
அஸ்மத்பீதிவ்யபோஹம் விதததுு ந்ருஹரேரட்டஹாஸாத்புதாநி ॥

प्रत्यादिष्टपुरातनप्रहरणग्रामः क्षणं पाणिजैः
अव्यात् त्रीणि जगन्त्यकुण्ठमहिमा वैकुण्ठकण्ठीरवः ।
यत्प्रादुर्भवनादवन्ध्यजठरा यादृच्छिकाद् वेधसां
या काचित् सहसा महासुरगृहस्थूणा पितामह्यभूत् ।।

ப்த்யாதிஷ்டபுராதந ப்ரஹரண க்ராம: க்ஷணம் பாணிஜை:
அவ்யாத் த்ரீணி ஜகந்த்யகுண்டமஹிமா வைகுண்டகண்டீரவ:
யத்ப்ராதுர்பவநாதவந்த்யஜடரா யாத்ருச்சிகாத் வேதஸாம்
யா காசித் ஸஹஸா மஹாஸுரக்ருஹஸ்தூணா பிதாமஹ்யபூத்॥

इच्छामीन विहारकच्छप महापोत्रिन् यदृच्छाहरे
रक्षावामन रोषराम करुणाकाकुत्स्थ हेलाहलिन् ।
क्रीडावल्लव कल्कवाहनदशाकल्किन् (कल्पिन्) इति प्रत्यहं
जल्पन्तः पुरुषाः पुनन्ति भुवनं पुण्यौघपण्यापणाः ।।

இச்சாமீந விஹாரகச்சப மஹாபோத்ரிந் யத்ருச்சாஹரே
ரக்ஷாவாமந ரோஷராம கருணாகாகுத்ஸ்த ஹேலாஹலிந்।
க்ரீடாவல்லவ கல்கவாஹநதமாகல்கிந் (கல்பிந்) இதிப்ரத்யஹம்
ஜல்பந்த: புருஷா: புநந்தி புவநம் புண்யௌகபண்யாபணா: ॥

ஸ்ரீபாதுகாஸஹஸ்ரத்தில் ஸ்ரீந்ருஸிம்ஹன்

दशग्रीवस्तम्बेरमदलनदुर्दान्तहृदये
विहारस्वाच्छन्द्याद् विशति रघुसिंहे वनभुवम् ।
स्ववात्सल्यक्रोडीकृतभरतशावेव भवती
निराबाधां पादावनि ! न विजहौ कोसलगुहाम् ॥

தஶக்ரீவஸ்தம்பேரம தளநதுர்தாந்த ஹ்ருதயே
விஹார ஸ்வாச்சந்த்யாத் விஶதி ரகுஸிம்ஹே வநபுவம் ।
ஸ்வவாத்ஸல்யக்ரோடீக்ருதபரதஶாவைவ பவதீ
நிராபாதாம் பாதாவநி! ந விஜஹௌ கோஸலகுஹாம் ॥

प्रतिप्रस्थानपद्धतिः -३८ (१३८)

पदावनि ! क्वचन विक्रमणे भुजानां
पञ्चायुधी कररुहैर्भजते विकल्पम् ।
नित्यं त्वमेव नियता पदयोर्मुरारेः
तेनासि नूनमविकल्पसमाधियोग्या ॥

பாதாவநி! க்வசந விக்ரமணே புஜாநாம்
பஞ்சாயுதீ கரருஹைர் பஜதே விகல்பம் ।
நித்யம் த்வமேவ நியதா பதயோர் முராரே:
தேநாஸி நூநமவிகல்ப ஸமாதியோக்யா ॥

सञ्चारपद्धतिः -२८ (२८८)

प्रज्वलितपञ्चहेतिर्हिरण्मयीं त्वां हिरण्यविलयार्हः ।
आवहतु जातवेदाः श्रियमिव नः पादुके ! नित्यम् ॥

ப்ரஜ்வலித பஞ்சஹேதிர்
ஹிரண்மயீம் த்வாம் ஹிரண்யவிலயார்ஹ: ।
ஆவஹது ஜாதவேதா:
ஶ்ரியமிவ ந: பாதுகே! நித்யம் ॥

काञ्चनपद्धतिः -२० (७५०)

मुक्तांशुकेसरवती स्थिरवज्रदंष्ट्रा प्रह्लादसंपदनुरूपहिरण्यभेदा ।
मूर्तिः श्रियो भवसि माधवपादरक्षे! नाथस्य नूनमुचिता नरसिंहमूर्तेः ॥

முக்தாம்ஶுகேஸரவதீ ஸ்திரவஜ்ரதம்ஷ்ட்ரா
ப்ரஹ்லாதஸம்பதநுரூப ஹிரண்யபேதா ।
மூர்த்தி: ஶ்ரியோ பவஸி மாதவபாதரக்ஷே!
நாதஸ்ய நூநமுசிதா நரஸிம்ஹமூர்த்தே: ॥

प्रकीर्णपद्धतिः (८४६)

यादवाभ्युदये

अमृष्यतो मानुषसिंहनादं गिरीन्द्ररोधैरपि दुर्निरोधान् ।
बभञ्ज दृप्तो बलभद्रसिंहः सिंहान् द्विपेन्द्रानिव दुर्निवारः ॥ ५-२२

அம்ருஷ்யதோ மாநுஷஸிம்ஹநாதம்
கிரீந்த்ரரோதைரபி துர்நிரோதாந் ।
பபஞ்ச த்ருப்தோ பலபத்ரஸிம்ஹ:
ஸிம்ஹாந் த்விபேந்த்ராநிவ துர்நிவார: ॥

नखलीलाविदार्येषु नाथेषु विबुधद्विषाम् ।
परिष्करणपर्यायाः पञ्चापि तव हेतयः ॥ १०-८०

நகலீலாவிதார்யேஷு நாதேஷு விபுதத்விஷாம் ।
பரிஷ்கரணபர்யாயா: பஞ்சாபி தவ ஹேதய: ॥

सुषुवे नरसिंहं त्वां भक्तप्रह्लादसम्मुखम् ।
रक्षार्थमिह दीनानां रत्नस्थूणेव देवकी ॥ १६-२५

ஸுஷுவே நரஸிம்ஹம் த்வாம்
பக்தப்ரஹ்லாதஸம்முகம் ।
ரக்ஷார்த்தமிஹ தீநாநாம்
ரத்நஸ்தூணேவ தேவகீ ॥

उद्गच्छतापुरुषकेसरिणेव पूष्णा-
काले तमो विदलितं करजैः प्रवालैः ।
गाढं हिरण्यकशिपोरिव गात्रमन्यत्
सन्ध्याच्छलेन रुधिरं क्षरतीव सान्द्रम् ॥ १९-४८

உத்கச்சதா புருஷகேஸரிணேவ பூஷ்ணா
காலே தமோ விதளிதம் கரஜை: ப்ரவாளை: ।
காடம் ஹிரண்யகஶிபோரிவ காத்ரமந்யத்
ஸந்த்யாச்சலேந ருதிரம் க்ஷரதீவ ஸாந்த்ரம் ॥

## सुभाषितनीवी

येषां हिरण्यकशिपुक्षेत्रदानकरः करः ।
तेषां तिर्यङ्मुखत्वेऽपि पुरुषत्वं न हीयते ॥

யேஷாம் ஹிரண்யகஶிபுக்ஷேத்ரதாநகர: கர: ।
தேஷாம் திர்யங்முகத்வேऽபி புருஷத்வம் ந ஹீயதே ॥

वदान्यपद्धतिः -५

श्रीः

## ॥ कामासिकाष्टकम् ॥

(श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥)

श्रुतीनामुत्तरं भागं वेगवत्याश्च दक्षिणम् ।
कामादधिवसन् जीयात् कश्चिदद्भुतकेसरी ॥ १

तपनेन्द्वग्निनयनः तापानपचिनोतु नः ।
तापनीयरहस्यानां सारः कामासिकाहरिः ॥ २

आकण्ठमादिपुरुषं कण्ठीरवमुपरि कुण्ठितारातिम् ।
वेगोपकण्ठसङ्गात् विमुक्तवैकुण्ठबहुमतिमुपासे ॥ ३

बन्धुमखिलस्य जन्तोः बन्धुरपर्यङ्कबन्धरमणीयम् ।
विषमविलोचनमीडे वेगवतीपुलिनकेलिनरसिंहम् ॥ ४

स्वस्थानेषु मरुद्गणान् नियमयन् स्वाधीनसर्वेन्द्रियः
पर्यङ्कस्थिर धारणाप्रकटितप्रत्यङ्मुखावस्थितिः ।

प्रायेण प्रणिपेदुषां प्रभुरसौ योगं निजं शिक्षयन्
कामानातनुतात् अशेषजगतां कामासिकाकेसरी ॥ ५

विकस्वरनखस्वरुक्षतहिरण्यवक्षःस्थली
निरर्गलविनिर्गलद्रुधिरसिन्धुसन्ध्यायिताः ।
अवन्तु मदनासिकामनुजपञ्चवक्त्रस्य माम्
अहंप्रथमिकामिथःप्रकटिताहवा बाहवः ॥ ६

सटापटलभीषणे सरभसाट्टहासोद्भटे
स्फुरत्क्रुधि परिस्फुटत्भ्रकुटिकेऽपि वक्त्रे कृते ।
कृपाकपटकेसरिन् दनुजडिम्भदत्तस्तना
सरोजसदृशा दृशा व्यतिभिषज्य ते व्यज्यते ॥ ७

त्वयि रक्षति रक्षकैः किमन्यैः
त्वयि चारक्षति रक्षकैः किमन्यैः ।
इति निश्चितधीः श्रयामि नित्यं
नृहरे वेगवतीतटाश्रयं त्वाम् ॥ ८

इत्थं स्तुतः सकृदिहाष्टभिरेष पद्यैः
श्रीवेङ्कटेशरचितैस्त्रिदशेन्द्रवन्द्यः ।
दुर्दान्तघोरदुरितद्विरदेन्द्रभेदी
कामासिकानरहरिः वितनोतु कामान् ॥

(कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥)

---

# காமாஸிகாஷ்டகம்

## (ஸ்ரீமந்நிகமாந்தமஹாதேசிகன்)

ஸ்ரீமாந் வேங்கடநாதார்ய: கவிதார்க்கிககேஸரீ ।
வேதாந்தாசார்யவர்யோ மே ஸந்நிதத்தாம் ஸதா ஹ்ருதி ॥

ஶ்ருதீநாமுத்தரம் பாகம் வேகவத்யா: ச தக்ஷிணம் ।
காமாததிவஸந் ஜீயாத் கஶ்சிதத்புதகேஸரீ ॥ 1

தபநேந்த்வக்நி நயந: தாபாநபசிநோது ந: ।
தாபநீயரஹஸ்யாநாம் ஸார: காமாஸிகா ஹரி: ॥ 2

ஆகண்ட்டமாதிபுருஷம் கண்ட்டீரவ முபரி குண்ட்டிதாராதிம் ।
வேகோபகண்ட்ட ஸங்காத் விமுக்த வைகுண்ட்ட பஹுமதிமுபாஸே ॥

பந்துமகிலஸ்ய ஜந்தோ: பந்துரபர்யங்க பந்தரமணீயம் ।
விஷமவிலோசநமீடே வேகவதீபுலிநகேளிநரஸிம்ஹம் ॥ 4

ஸ்வஸ்த்தாநேஷு மருத்கணாந் நியமயந் ஸ்வாதீந ஸர்வேந்த்ரிய:
பர்யங்கஸ்த்திரதாரணாப்ரகடித ப்ரத்யங்முகாவஸ்திதி: ।
ப்ராயேண ப்ரணிபேதுஷாம் ப்ரபுரஸௌ யோகம் நிஜம் ஶிக்ஷயந்
காமாநாதநுதாதஶேஷ ஜகதாம் காமாஸிகா கேஸரீ ॥ 5

விகஸ்வரநகஸ்வருக்ஷதஹிரண்யவக்ஷஸ்ஸ்த்தலீ
நிரர்க்களவிநிர்க்களத்ருதிரஸிந்துஸந்த்யாயிதா:।
அவந்து மதநாஸிகாமநுஜபஞ்சவக்த்ரஸ்ய மாம்
அஹம்ப்ரதமிகா மித: ப்ரகடிதாஹவா பாஹவ: ॥ 6

ஸடா படல பீஷணே ஸரபஸாட்ட ஹாஸோத்படே
ஸ்ப்புரத்க்ருதி பரிஸ்ப்புடத்ப்ருகுடிகேऽபி வக்த்ரே க்ருதே ।
க்ருபாகபடகேஸரிந் தநுஜடிம்பதத்தஸ்தநா
ஸரோஜஸத்ருஶா த்ருஶா வ்யதிவிஷஜ்ய தே வ்யஜ்யதே ॥ 7

த்வயி ரக்ஷதி ரக்ஷகை: கிமந்யை:
த்வயி சாரக்ஷதி ரக்ஷகை: கிமந்யை: ।
இதி நிஶ்சித தீ: ஶ்ரயாமி நித்யம்
ந்ருஹரே வேகவதீ தடாஶ்ரயம் த்வாம் ॥ 8

இத்தம் ஸ்துத: ஸக்ருதிஹாஷ்டபிரேஷ பத்யை:
ஸ்ரீவேங்கடேஶ ரசிதைஸ் த்ரிதஶேந்த்ர வந்த்ய: ।
துர்தாந்த கோர துரித த்விரதேந்த்ர பேதீ
காமாஸிகா நரஹரிர் விதநோது காமாந் ॥ 9

கவிதார்க்கிக ஸிம்ஹாய கல்யாண குணஶாலிநே ।
ஸ்ரீமதே வேங்கடேஶாய வேதாந்த குரவே நம: ॥

# ॥ श्री नृसिंहाष्टकम् ॥

(ஸ்ரீமத் பரமஹம்ஸேத்யாதி அழகிய மணவாள ஜீயரால் இயற்றப்பட்ட இந்த ந்ருஸிம்ஹாஷ்டகத்தைப் பாராயணம் செய்பவர்களுக்கு ஸகல கஷ்டங்களும் நீங்கி, க்ஷேமமுண்டாகும்.)

श्रीमदकलङ्कपरिपूर्णशशिकोटि-श्रीधर मनोहर सटापटलकान्त ।
पालय कृपालय भवाम्बुधिनिमग्नं दैत्यवरकाल नरसिंह नरसिंह! ॥ १

पादकमलावनतपातकिजनानां पातकदवानल पतत्रिवरकेतो ।
भावन परायण भवार्तिहरया मां पाहि कृपयैव नरसिंह नरसिंह! ॥ २

तुङ्गनख-पङ्क्ति-दलितासुरवरासृक्-पङ्कनवकुङ्कुमविपङ्किलमहोरः ।
पण्डितनिधान कमलालय नमस्ते पङ्कजनिषण्ण नरसिंह नरसिंह! ॥

मौलिषु विभूषणमिवामरवराणां योगिहृदयेषु च शिरस्सु निगमानाम् ।
राजदरविन्दरुचिरं पदयुगं ते देहि मम मूर्ध्नि नरसिंह नरसिंह! ॥ ४

वारिजविलोचन मदन्तिमदशायां क्लेशविवशीकृतसमस्तकरणायाम् ।
एहि रमया सह शरण्य! विहगानां नाथमधिरुह्य नरसिंह नरसिंह! ॥ ५

हाटककिरीटवरहारवनमाला-तारशनामकरकुण्डलमणीन्द्रैः ।
भूषित-मशेष-निलयं तव वपुर्मे चेतसि चकास्तु नरसिंह नरसिंह! ॥६

इन्दुरविपावकविलोचन रमायाः मन्दिर महाभुजलसद्वररथाङ्ग! ।
सुन्दर चिराय रमतां त्वयि मनो मे नन्दितसुरेश नरसिंह नरसिंह ! ॥

माधव मुकुन्द मधुसूदन मुरारे वामन नृसिंह शरणं भव नतानाम् ।
कामद घृणिन् निखिलकारण नयेयं कालममरेश नरसिंह नरसिंह !

अष्टकमिदं सकलपातकभयघ्नं कामदमशेषदुरितामयरिपुघ्नम् ।
यः पठति सन्ततमशेषनिलयं ते गच्छति पदं स नरसिंह नरसिंह! ॥

---

# ஶ்ரீந்ருஸிம்ஹாஷ்டகம்

ஶ்ரீமதகலங்க பரிபூர்ண ஶஶிகோடி
ஶ்ரீதர மநோஹர ஸடாபடல காந்த ।
பாலய க்ருபாலய பவாம்புதிநிமக்நம்
தைத்யவரகால நரஸிம்ஹ நரஸிம்ஹ ॥ 1

பாதகமலாவநத பாதகிஜநாநாம்
பாதகதவாநல பதத்ரிவரகேதோ ।
பாவன பராயண பவார்த்திஹரயா மாம்
பாஹி க்ருபயைவ நரஸிம்ஹ நரஸிம்ஹ ॥ 2

துங்கநகபங்க்தி தளிதாஸுரவராஸ்ருக்
பங்கநவகுங்கும விபங்கிலமஹோரா:।
பண்டிதநிதாந கமலாலய நமஸ்தே
பங்கஜநிஷண்ண நரஸிம்ஹ நரஸிம்ஹ ॥ 3

மௌளிஷு விபூஷண மிவாமரவராணாம்
யோகி ஹ்ருதயேஷு ச ஶிரஸ்ஸு நிகமாநாம் ।
ராஜதரவிந்த ருசிரம் பதயுகம் தே
தேஹி மம மூர்த்நி நரஸிம்ஹ நரஸிம்ஹ ॥ 4

வாரிஜவிலோசந மதந்திம தஶாயாம்
க்லேஶ விவஶீக்ருத ஸமஸ்த கரணாயாம் ।
ஏஹி ரமயா ஸஹ ஶரண்ய விஹகாநாம்
நாதமதிருஹ்ய நரஸிம்ஹ நரஸிம்ஹ ॥ 5

ஹாடககிரீட வரஹாரவநமாலா
தார ரஶநா மகரகுண்டல மணீந்த்ரை: ।
பூஷிதமஶேஷநிலயம் தவ வபுர் மே
சேதஸி சகாஸ்து நரஸிம்ஹ நரஸிம்ஹ ॥ 6

இந்துரவிபாவகவிலோசந ரமாயா:
மந்திர மஹாபுஜ லஸத்வர ரதாங்க! ।
ஸுந்தர சிராய ரமதாம் த்வயி மநோ மே
நந்திதஸுரேஶ நரஸிம்ஹ நரஸிம்ஹ! ॥ 7

மாதவ முகுந்த மதுஸூதந முராரே
வாமந ந்ருஸிம்ஹ ஶரணம் பவ நதாநாம் ।
காமத க்ருணிந் நிகில காரண நயேயம்
கால மமரேஶ நரஸிம்ஹ நரஸிம்ஹ ॥ 8

அஷ்டகமிதம் ஸகலபாதக பயக்நம்
காமதமஶேஷதுரிதாமயரிபுக்நம் ।
ய: படதி ஸந்ததமஶேஷநிலயம் தே
கச்சதி பதம் ஸ நரஸிம்ஹ நரஸிம்ஹ ॥ 9

श्रीमते श्रीलक्ष्मीनृसिंहपरब्रह्मणे नमः

## श्री चोलसिंहपुर (श्रीघटिकाचल)

## ।। श्रीयोगलक्ष्मीनृसिंह सुप्रभातम् ।।

(சோளங்கிபுரம் மஹாகுரு என்று பிரஸித்தி பெற்ற ஸ்ரீதொட்டையாசார்ய ஸ்வாமியால் சுமார் 500 ஆண்டுகளுக்கு முன் இயற்றப்பட்ட சுப்ரபாதத்தை தினமும் காலையில் படிப்பவர்களிடம் பகவான் கருணை கொண்டு, ஸகல சௌபாக்யங்களையும் அருளுவது திண்ணம்)

कौसल्यासुप्रजाराम पूर्वा सन्ध्या प्रवर्तते ।
उत्तिष्ठ नरशार्दूल! कर्तव्यं दैवमाह्निकम् ।।

उत्तिष्ठोत्तिष्ठ गोविन्द उत्तिष्ठ गरुडध्वज ।
उत्तिष्ठ कमलाकान्त त्रैलोक्यं मङ्गलं कुरु ।।

मातः सुधाफललते! महनीयशीले!
वक्षोविहाररसिके! नृहरेरजस्रम् ।
क्षीराम्बुराशितनये! श्रितकल्पवल्लि!
श्रीमन्नृसिंहदयिते! तव सुप्रभातम् ।। १

तव सुप्रभातमनवद्यवैभवे
घटिकेश-सद्गुण-निवास-भूतले ।
घटिताखिलार्थघटकाद्रिशेखरे
घटिकाद्रिनाथदयिते! दयानिधे ।। २

अत्र्यादिका मुनिगणा विरचय्य सन्ध्यां
दिव्यस्रवन्मधुझरीक-सरोरुहाणि ।
पादार्पणाय परिगृह्य पुरः प्रपन्नाः
श्रीमन्नृसिंह! विजयीभव सुप्रभातम् ।। ३

सप्तर्षिसङ्घकृत-संस्तुति-सुप्रसन्न!
श्रीमन्नृसिंह गुणरूप रमामहीभ्याम् ।

साकं नृसिंहगिरि-सत्त्वकृताधिवास!
श्रीमन्नृसिंह! विजयीभव सुप्रभातम् ॥ ४

देवारिभञ्जन-मरुत्सुत-दत्तशङ्ख-
चक्रातपत्रित-फणीश्वर-पत्रिशेषिन् ।
देवेन्द्रमुख्य-सुरपूजित-पादपद्म
श्रीमन्नृसिंह! विजयीभव सुप्रभातम् ॥ ५

स्वामिन्! सुरेश! मधुरेश! समाहितार्थ-
ध्यानप्रवीण! विनतावनजागरूक ।
सर्वज्ञ! सन्ततसमीरितसर्ववृत्त!
श्रीमन्नृसिंह! विजयीभव सुप्रभातम् ॥ ६

प्रह्लादरक्षणनिदानकृतावतार!
मुग्धस्वकीयनखरैः स्फुटितारिवक्षः ।
सर्वाभिवन्द्य-निजवैभव चन्द्रकान्त!
श्रीमन्नृसिंह! विजयीभव सुप्रभातम् ॥ ७

भक्तोचितादिसरसः सुगुणं प्रकृष्टं
तीर्थं सुवर्णघट-पूरितमादरेण ।
धृत्वा श्रुतिप्रवचनैकपरा लसन्ति
श्रीमन्नृसिंह! विजयीभव सुप्रभातम् ॥ ८

संश्लाघनीय-परमोत्तर-रङ्गवासि-
सूरिस्तुतिप्रथितविग्रह-कान्तिकान्त ।
सद्भिः समर्चित-पदाम्बुज! साधुरक्षिन्
श्रीमन्नृसिंह! विजयीभव सुप्रभातम् ॥ ९

तीर्थानि गोमुगखगतान्यखिलानि धृत्वा
भव्यानि भव्यनिकराः परितो लसन्ति ।

गायन्ति गानचतुरास्तव दिव्यवृत्तं
श्रीमन्नृसिंह! विजयीभव सुप्रभातम् ॥ १०

वाराणसी-प्रथित-विष्णुपदी-प्रयाग-
विख्यात-विश्वनत-सद्घटिकाचलेन्द्र ।
सम्प्रार्थितार्थ-परिदान-कृतैकदीक्ष!
श्रीमन्नृसिंह! विजयीभव सुप्रभातम् ॥ ११

पार्श्वद्वयस्थित-रमामहिशोभमान!
श्रीचोलसिंहपुर-भाग्यकृतावतार ।
स्वामिन् सुशील सुलभाश्रितपारिजात!
श्रीमन्नृसिंह! विजयीभव सुप्रभातम् ॥ १२

श्रीश्रीनिवास-घनदेशिकवर्य-भक्ति-
संवर्धित-प्रतिदिनोत्सव-शोभमान ।
कल्याणचेलकनकोज्ज्वलभूषणाढ्य!
श्रीमन्नृसिंह! विजयीभव सुप्रभातम् ॥ १३

श्रीब्रह्मतीर्थतटमागत-मञ्जनाभं
देवं प्रणम्य वरदं घटिकाद्रिमेत्य ।
वाधूल-मानिधि-महागुरुरेष आस्ते
श्रीमन्नृसिंह! विजयीभव सुप्रभातम् ॥ १४

आचार्यपूरुषवरा ह्यभिरामवृद्धा
अर्हाभिपूज्यतर-मङ्गलवस्तुहस्ताः ।
त्वत्पादपङ्कज-सिषेविषया प्रपन्नाः
श्रीमन्नृसिंह! विजयीभव सुप्रभातम् ॥ १५

श्रीमन्नृसिंहगिरिशेखरसुप्रभातं
ये मानवाः प्रतिदिनं पठितुं प्रवृत्ताः ।
तेभ्यः प्रसन्नवदनः कमलासहायः
सर्वाणि वाञ्छितफलानि ददाति कामम् ॥ १६

## சோளஸிம்ஹபுரம்

## ஸ்ரீயோக லக்ஷ்மீநரஸிம்ஹ ஸுப்ரபாதம்

கௌஸல்யா ஸுப்ரஜா ராம பூர்வா ஸந்த்யா ப்ரவர்த்ததே ।
உத்திஷ்ட நரசார்தூல கர்தவ்யம் தைவமாஹ்நிகம் ॥
உத்திஷ்டோத்திஷ்ட கோவிந்த! உத்திஷ்ட கருடத்வஜ ।
உத்திஷ்ட கமலாகாந்த! த்ரைலோக்யம் மங்களம் குரு ॥

மாதஸ் ஸுதாபலலதே! மஹநீயசீலே
வசேஷாவிஹாரரஸிகே ந்ருஹரேரஜஸ்ரம் ।
க்ஷீராம்புராசிதநயே ச்ரிதகல்பவல்லி
ஸ்ரீமந் ந்ருஸிம்ஹதயிதே! தவ ஸுப்ரபாதம் ॥ 1

தவ ஸுப்ரபாதமநவத்யவைபவே
கடிகேச ஸத்குண நிவாஸ பூதலே ।
கடிதாகிலார்த்தகடிகாத்ரிசேகரே
கடிகாத்ரிநாததயிதே! தயாநிதே! ॥ 2

அத்ர்யாதிகா முநிகணா விரசய்ய ஸந்த்யாம்
திவ்யஸ்ரவந் மதுஜரீகஸரோருஹாணி ।
பாதார்ப்பணாய பரிக்ருஹ்ய புர: ப்ரபந்நா:
ஸ்ரீமந் ந்ருஸிம்ஹ! விஜயீபவ ஸுபரபாதம் ॥ 3

ஸப்தர்ஷிஸங்கக்ருதஸம்ஸ்துதி ஸுப்ரஸந்ந!
ஸ்ரீமந் ந்ருஸிம்ஹ குணரூப ரமாமஹீப்யாம் ।
ஸாகம் ந்ருஸிம்ஹ கிரிஸத்த்வ க்ருதாதிவாஸ!
ஸ்ரீமந் ந்ருஸிம்ஹ! விஜயீபவ ஸுப்ரபாதம் ॥ 4

தேவாரிபஞ்ஜந மருத்ஸுதத்தசங்க
சக்ராதபத்ரிதபணீச்வரபத்ரிசேஷிந் ।
தேவேந்த்ரமுக்யஸுரபூஜித பாதபத்ம!
ஸ்ரீமந் ந்ருஸிம்ஹ! விஜயீபவ ஸுப்ரபாதம் ॥ 5

ஸ்வாமிந் ஸுரேச மதுரேச ஸமாஹிதார்த்த
த்யாந ப்ரவீண விநதாவந ஜாகரூக! ।
ஸர்வஜ்ஞ ஸந்தத ஸமீரித ஸர்வவ்ருத்த
ஸ்ரீமந் ந்ருஸிம்ஹ! விஜயீபவ ஸுப்ரபாதம் ॥ 6

ப்ரஹ்லாதரக்ஷணநிதானக்ருதாவதார!
முக்த ஸ்வகீய நகரை: ஸ்புடிதாரிவக்ஷ: ।

ஸர்வாபிவந்த்ய நிஜவைபவ சந்த்ரகாந்த
ஸ்ரீமந் ந்ருஸிம்ஹ! விஜயீபவ ஸுப்ரபாதம் ॥ 7

பக்தோசிதாதிஸரஸஸ் ஸுகுணம் ப்ரக்ருஷ்டம்
தீர்த்தம் ஸுவர்ணகட பூரிதமாதரேண ।
த்ருத்வா ம்ருதி ப்ரவசநைகபரா லஸந்தி
ஸ்ரீமந் ந்ருஸிம்ஹ! விஜயீபவ ஸுப்ரபாதம் ॥ 8

ஸம்ப்லாகநீய பரமோத்தர ரங்கவாஸி
ஸூரிஸ்துதி ப்ரதித விக்ரஹ காந்தி காந்த ।
ஸத்பிஸ்ஸமர்சித பதாம்புஜ ஸாது ரக்ஷிந்
ஸ்ரீமந் ந்ருஸிம்ஹ! விஜயீபவ ஸுப்ரபாதம் ॥ 9

தீர்த்தாநி கோமுககதாந்யகிலாகநி த்ருத்வா
பவ்யாநி பவ்ய நிகரா: பரிதோ லஸந்தி ।
காயந்தி காநசதுராஸ் தவ திவ்யவ்ருத்தம்
ஸ்ரீமந் ந்ருஸிம்ஹ! விஜயீபவ ஸுப்ரபாதம் ॥ 10

வாராணஸீ ப்ரதித விஷ்ணுபதீப்ரயாக
விக்யாத விம்வநத ஸத்கடிகாசலேந்த்ர ।
ஸம்ப்ரார்த்திதார்த்த பரிதாந க்ருதைகதீக்ஷ
ஸ்ரீமந் ந்ருஸிம்ஹ! விஜயீபவ ஸுப்ரபாதம் ॥ 11

பார்ம்வத்வய ஸ்தித ரமாமஹி மோபமாந
ஸ்ரீ சோளஸிம்ஹபுர பாக்ய க்ருதாவதார ।
ஸ்வாமிந் ஸுமீல ஸுலபாம்ரித பாரிஜாத
ஸ்ரீமந் ந்ருஸிம்ஹ! விஜயீபவ ஸுப்ரபாதம் ॥ 12

ஸ்ரீ ஸ்ரீநிவாஸ கநதேமிகவர்ய பக்தி
ஸம்வர்த்தித ப்ரதிதிநோத்ஸவ மோபமாந ।
கல்யாணசேல கனகோஜ்ஜ்வல பூஷணாட்ய
ஸ்ரீமந் ந்ருஸிம்ஹ! விஜயீபவ ஸுப்ரபாதம் ॥ 13

ஸ்ரீ ப்ரம்ஹதீர்த்ததடமாகதமஞ்ஜநாபம்
தேவம் ப்ரணம்ய வரதம் கடிகாத்ரிமேத்ய ।
வாதூல மாநிதி மஹாகுருரேஷ ஆஸ்தே
ஸ்ரீமந் ந்ருஸிம்ஹ! விஜயீபவ ஸுப்ரபாதம் ॥ 14

ஆசார்ய பூருஷவரா ஹ்யபிராம வ்ருத்தா:
அர்ஹாபிபூஜ்யதர மங்களவஸ்து ஹஸ்தா: ।
த்வத் பாத பங்கஜ ஸிஷேவிஷயா ப்ரபந்நா:
ஸ்ரீமந்ந்ருஸிம்ஹ! விஜயீபவ ஸுப்ரபாதம் ॥ 15

